श्यादिगमने महिष्युष्ट्रीकपीस्तथा। खरीञ्च शूकरीं गत्वा प्राजापत्यं समाचरेत्॥ गोगामी च त्रिरात्रेण गामेकं ब्राह्मणे ददत् महिष्युष्ट्रखरीगामी त्वहोरात्रेण शुध्यति॥ डामरे समरे वापि दुर्भिक्षे वा जनक्षये। वन्दिग्राहे भयार्त्ते वा सदा स्वस्त्रीं निरीक्षयेत्॥ चाण्डालैः सह सम्पर्कं या नारी कुरुते ततः। विप्रान् दश वरान् गत्वा स्वकं दोषं प्रकाशयेत्॥ आकण्ठसम्मिते कूपे गोमयोदककर्दमे। तत्र स्थित्वा निराहारा त्वेकरात्रेण निष्क्रमेत्॥ सशिखं वपनं कृत्वा भुञ्जीयाद्यावकौदनम्। त्रिरात्रमुपवासित्वा ह्येकरात्रं जले वसेत्॥ शङ्खपुष्पीलतामूलं पत्रञ्च कुसुमं फलम्। सुवर्णं पञ्चगव्यञ्च क्वाथयित्वा पिबेज्जलम्॥ एकभक्तं चरेत् पश्चाद्यावत् पुष्पवती भवेत्। व्रतं चरति तद्यावत्तावत् संवसते बहिः॥ प्रायश्चित्ते ततश्चीर्णे कुर्य्याद्ब्राह्मणभोजनम्। गोद्वयं दक्षिणां दद्याच्छुद्धिः पाराशरोऽब्रवीत्॥ चातुर्वर्ण्यस्य नारीणां कृच्छ्रचान्द्रायणं व्रतम्। यथा भूमिस्तथा नारी तस्मात्तां नतु दूषयेत्॥ वन्दिग्राहेण या भुक्ता हत्वा बद्ध्वा बलाद्भयात्। कृत्वा सान्तपनं कृच्छ्रं शुद्ध्येत् पाराशरोऽब्रवीत्॥ सकृद्भुक्ता तु या नारी नेच्छन्ती पापकर्मभिः। प्राजापत्येन शुध्येत ऋतुप्रस्रवणेन तु॥ पतत्यर्द्धं शरीरस्य यस्य भार्य्या सुरां पिबेत्। पतितार्द्धशरीरस्य निष्कृतिर्न विधीयते॥ गायत्रीं जपमानस्तु कृच्छ्रं सान्तपनं चरेत्॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्। एकरात्र्युपवासश्च कृच्छ्रं सान्तपनं स्मृतम्॥ जारेण जनयेद्गर्भं गते त्यक्ते मृते पतौ। तां त्यजेदपरे राष्ट्रे पतितां पापकारिणीम्॥ ब्राह्मणी तु यदा गच्छेत् परपुंसा समन्विता। सा तु नष्टा विनिर्दिष्टा न तस्या गमनं पुनः॥ कामान्मोहाद्यदा गच्छेत्त्यक्त्वा बन्धून् सुतान् पतिम्। सा तु नष्टा परे

लोके मानुषेषु विशेषतः ॥ दशमे तु दिने प्राप्ते प्रायश्चित्तं न विद्यते । दशाहं न त्यजेन्नारी त्यजेन्नष्टश्रुता तथा ॥ भर्त्ता चैव चरेत् कृच्छ्रं कृच्छ्रार्द्धं चैव बान्धवाः । तेषां भुक्त्वा च पीत्वा च अहोरात्रेण शुध्यति ॥ ब्राह्मणी तु यदा गच्छेत् परपुंसा विवर्जिता । गत्वा पुंसां शतं याति त्यजेयु स्तान्तु गोत्रिणः ॥ पुंसो यदि गृहं गच्छेत्तदशुद्धं गृहं भवेत् । पितृमातृगृहं यच्च जारस्यैव तु तद्गृहम् ॥ उल्लिख्य तद्गृहं पश्चात् पञ्चगव्येन शुद्ध्यति । त्यजेन्मृण्मयपात्राणि वस्त्रं काष्ठञ्च शोधयेत् ॥ सम्भारान् शोधयेत् सर्व्वान् गोकेशैश्च फलोद्भवान् । ताम्राणि पञ्चगव्येन कांस्यानि दश भस्मभिः ॥ प्रायश्चित्तं चरेद्विप्रो ब्राह्मणे रुपपादितम् । गोद्वयं दक्षिणां दद्यात् प्राजापत्यं समाचरेत् ॥ इतरेषा महोरात्रं पञ्चगव्येन शोधनम् । सपुत्रः सह भृत्यैश्च कुर्य्याद् ब्राह्मणभोजनम् ॥ आकाशं वायुरग्निश्च मेध्यं भूमिगतं जलम् । न दुष्यन्तीह दर्भाश्च यज्ञेषु च समास्तथा ॥ उपवासैर्व्रतैः पुण्यैः स्नानसन्ध्यार्च्चनादिभिः । जपैर्होमैस्तथा दानैः शुद्ध्यन्ते ब्राह्मणाः सदा ॥ इति पाराशरे धर्मशास्त्रे दशमोऽध्यायः ॥

अमेध्यरेतोगोमांसं चाण्डालान्नमथापि वा । यदि भुक्तन्तु विप्रेण कृच्छ्रं चान्द्रायणञ्चरेत् ॥ तथैव क्षत्रियो वैश्य स्तदर्द्धन्तु समाचरेत् । शूद्रोऽप्येवं यदा भुङ्क्ते प्राजापत्यं समाचरेत् ॥ पञ्चगव्यं पिबेच्छूद्रो ब्रह्मकूर्च्चं पिबेद्द्विजः । एकद्वित्रिचतुर्गाश्च दद्याद्विप्रादनुक्रमात् ॥ शूद्रान्नं सूतकस्यान्न मभोज्यस्यान्नमेव च । शङ्कितं प्रतिषिद्धान्नं पूर्व्वोच्छिष्टं तथैव च ॥ यदि भुक्तन्तु विप्रेण अज्ञानादापदापि वा । ज्ञात्वा समाचरेत् कृच्छ्रं ब्रह्मकूर्च्चन्तु पावनम् ॥ व्यालैर्नकुलमार्जारै रन्नमुच्छिष्टितं यदा । तिलदर्भोदकैः प्रोक्ष्य शुध्यते नात्र संशयः ॥ शूद्रोऽप्यभोज्यं भुक्त्वा

न्नं पञ्चगव्येन शुध्यति। क्षत्रियो वापि वैश्यश्च प्राजापत्येन शु
ध्यति॥ एकपंक्त्युपविष्टानां विप्राणां सहभोजने। यद्येकोऽपि
त्यजेत् पात्रं शेषमन्नं न भोजयेत्॥ मोहाद्वा लोभतस्तत्र पंक्ता
दुच्छिष्टभोजने। प्रायश्चित्तं चरेद्विप्रः कृच्छ्रं सान्तपनन्तथा॥
पीयूषश्वेतलशुन वृन्ताकफलगृञ्जनम्॥ पलाण्डुं वृक्षनिर्य्यासं
देवस्वं कवकानि च। उष्ट्रीक्षीर मविक्षीर मज्ञानाद्भुञ्जति द्विजः॥
त्रिरात्रमुपवासी स्यात् पञ्चगव्येन शुध्यति। मण्डूकं भक्षयि-
त्वा च मूषिकामांसमेवच॥ ज्ञात्वा विप्रस्त्वहोरात्रं यावकान्नेन
शुध्यति। क्षत्रियोवापि वैश्योवा क्रियावन्तौ शुचिव्रतौ। तद्गृहे-
षु द्विजैर्भोज्यं हव्यकव्येषु नित्यशः॥ घृतं तैलं तथा क्षीरं गुडं तै
लेन पाचितम्। गत्वा नदीतटे विप्रो भुञ्जीयाच्छूद्रभोजनम्॥
अज्ञानाद्भुञ्जते विप्राः सूतके मृतकेऽपिवा। प्रायश्चित्तं कथं
तेषां वर्णे वर्णे विनिर्द्दिशेत्॥ गायत्र्यष्टसहस्रेण शुद्धः स्याच्छू
द्रसूतके। वैश्ये पञ्चसहस्रेण त्रिसहस्रेण क्षत्रियः॥ ब्राह्मण
स्य यदा भुङ्क्ते प्राणायामेन शुध्यति। अथवा वामदेव्येन सा
म्ना चैकेन शुध्यति॥ शुष्कान्नं गोरसं स्नेहं शूद्रवेशमन आगत-
म्। पक्वं विप्रगृहे पूतं भोज्यं तन्मनुरब्रवीत्॥ आपत्काले तु वि
प्रेण भुक्तं शूद्रगृहे यदि। मनस्तापेन शुध्येत द्रुपदां वा शतं
जपेत्॥ दासनापितगोपाल कुलमित्रार्द्धसीरिणः। एते शूद्रे
षु भोज्यान्ना यश्चात्मानं निवेदयेत्॥ शूद्रकन्यासमुत्पन्नो
ब्राह्मणेन तु संस्कृतः। संस्कृतस्तु भवेद्दास्यो ह्यसंस्कारैस्तु ना
पितः॥ क्षत्रियाच्छूद्रकन्यायां समुत्पन्नस्तु यः सुतः। स गोपा
ल इति ज्ञेयो भोज्याविप्रैर्न संशयः॥ वैश्यकन्यासमुत्पन्नो ब्रा-
ह्मणेन तु संस्कृतः। आर्द्धिकश्च सतु ज्ञेयो भोज्यो विप्रैर्न संश-
यः॥ भाण्डस्थित मभोज्येषु जलं दधि घृतं पयः। अकामतस्तु

यो भुङ्क्ते प्रायश्चित्तं कथं भवेत्॥ ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वाप्युपसर्पति। ब्रह्मकूर्च्चोपवासेन यथावर्णस्य निष्कृतिः॥ शूद्राणां नोपवासः स्याच्छूद्रो दानेन शुध्यति। ब्रह्मकूर्च्चमहोरात्रं श्वपाकमपि शोधयेत्॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्। निर्द्दिष्टं पञ्चगव्यन्तु पवित्रं पापनाशनम्॥ गोमूत्रं कृष्णवर्णायाः श्वेताया गोमयं हरेत्। पयश्च ताम्रवर्णाया रक्ताया दधि चोच्यते॥ कपिलाया घृतं ग्राह्यं सर्व्वं कापिलमेव वा। गोमूत्रस्य पलं दद्याद्दध्नस्त्रिपलमुच्यते॥ आज्यस्यैकपलं दद्यादङ्गुष्ठार्द्धन्तु गोमयम्। क्षीरं सप्तपलं दद्यात् पलमेकं कुशोदकम्॥ गायत्र्यागृह्य गोमूत्रं गन्धद्वारेति गोमयम्। आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि॥ तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम्। पञ्चगव्यमृचा पूतं स्थापयेदग्निसन्निधौ॥ आपोहिष्ठेति चालोड्य मानस्तोकेति मन्त्रयेत्। सप्तावरास्तु ये दर्भा अच्छिन्नाग्राः शुकत्विषः॥ एभिरुद्धृत्य होतव्यं पञ्चगव्यं यथाविधि। इरावती इदं विष्णुर्मानस्तोके च शंवती॥ एतैरुद्धृत्य होतव्यं हुतशेषं स्वयं पिबेत्। आलोड्य प्रणवेनैव निर्म्मथ्य प्रणवेन तु। उद्धृत्य प्रणवेनैव पिबेच्च प्रणवेन तु॥ यत्त्वगस्थिगतं पापं देहे तिष्ठति देहिनाम्। ब्रह्मकूर्च्चो दहेत् सर्व्वं यथैवाग्निरिवेन्धनम्॥ पिबतः पतितं तोयं भाजने मुखनिःसृतम्। अपेयं तद्विजानीयाद्भुक्त्वा चान्द्रायणं चरेत्॥ कूपे च पतितं दृष्ट्वा श्वशृगालौ च मर्कटम्। अस्थि चर्म्मादि पतितं पीत्वा मेध्या अपो द्विजः॥ नारन्तु कूपे काकञ्च विड्वराहखरोष्ट्रकम्। गावयं सौप्रतीकञ्च मायूरं खाड्गकं तथा॥ वैयाघ्रमार्क्षं सैंहं वा कुणपं यदि मज्जति। तडागस्थाय दुष्टस्य पीतं स्यादुदकं यदि॥ प्रायश्चित्तं भवेत् पुंसः क्रमेणैतेन सर्व

शः। विप्रः शुद्ध्येत्त्रिरात्रेण क्षत्रियस्तु दिनद्वयात्॥ एकाहेन तु वैश्यस्तु शूद्रो नक्तेन शुध्यति॥ परपाकनिवृत्तस्य परपाकरतस्य च। अपचस्य च भुक्त्वान्नं द्विजश्चान्द्रायणञ्चरेत्॥ अपचस्य च यद्दाने दातुश्चास्य कुतः फलम्। दाता प्रतिगृहीता च द्वौ तौ निरयगामिनौ॥ गृहीत्वाग्निं समारोप्य पञ्च यज्ञान्न वर्त्तयेत्। परपाकनिवृत्तोऽसौ मुनिभिः परिकीर्त्तितः॥ पञ्चयज्ञं स्वयं कृत्वा परान्नेनोपजीवति। सततं प्रातरुत्थाय परपाकरतो हि सः॥ गृहस्थधर्म्मो यो विप्रो ददाति परिवर्ज्जितः। ऋषिभिर्धर्म्मतत्त्वज्ञैरपचः परिकीर्त्तितः॥ युगे युगे च ये धर्म्मास्तेषु धर्मेषु ये द्विजाः। तेषां निन्दा न कर्त्तव्या युगरूपा हि ब्राह्मणाः॥ हुङ्कारं ब्राह्मणस्योक्त्वा त्वङ्कारञ्च गरीयसः। स्नात्वा तिष्ठन्नहः शेषमभिवाद्य प्रसादयेत्॥ ताडयित्वा तृणेनापि कण्ठे वा बध्यवाससा। विवादेनापि निर्जित्य प्रणिपत्य प्रसादयेत्॥ अवगूर्य्य त्वहोरात्रं त्रिरात्रं क्षितिपातने। अतिकृच्छ्रञ्च रुधिरे कृच्छ्रमन्तरशोणिते॥ नवाहमतिकृच्छ्रं स्यात् पाणिपूरान्नभोजनम्। त्रिरात्रमुपवासः स्यादतिकृच्छ्रः स उच्यते॥ सर्वेषामेव पापानां सङ्करे समुपस्थिते। शतसाहस्रमभ्यस्ता गायत्री शोधनं परम्॥ इति पाराशरे धर्म्मशास्त्रे एकादशोऽध्यायः॥

दुःस्वप्नं यदि पश्येत्तु वान्ते वा क्षुरकर्मणि। मैथुने प्रेतधूमे च स्नानमेव विधीयते॥ अज्ञानात् प्राश्य विण्मूत्रं सुरां वा पिबते यदि। पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः॥ अजिनं मेखला दण्डो भैक्षचर्य्या व्रतानि च। निवर्त्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि॥ स्त्रीशूद्रस्य तु शुद्ध्यर्थं प्राजापत्यं विधीयते। पञ्चगव्यं ततः कृत्वा स्नात्वा पीत्वा विशुध्यति॥ जलाग्निपतने चैव प्रव्रज्यानाशकेषु च। प्रत्यवसितमेतेषां कथं

शुद्धिर्विधीयते ॥ प्राजापत्यद्वयेनापि तीर्थाभिगमनेन च। वृषे-
कादशदानेन वर्णाः शुध्यन्ति ते त्रयः ॥ ब्राह्मणस्य प्रवक्ष्यामि
वनं गत्वा चतुष्पथम्। सशिखं वपनं कृत्वा प्राजापत्यत्रयञ्चरेत्
॥ गोद्वयं दक्षिणां दद्याच्छुद्धिः स्वायम्भुवोऽब्रवीत्। मुच्यते तेन पा
नेन ब्राह्मणत्वञ्च गच्छति ॥ स्नानानि पञ्च पुण्यानि कीर्त्ति-
तानि मनीषिभिः। आग्नेयं वारुणं ब्राह्मं वायव्यं दिव्यमेव च
॥ आग्नेयं भस्मना स्नानमवगाह्य तु वारुणम्। आपोहिष्ठेति
च ब्राह्मं वायव्यं रजसा स्मृतम् ॥ यत्तु सातपवर्षेण स्नानं त
द्दिव्यमुच्यते। तत्र स्नाने तु गङ्गायां स्नातो भवति मानवः ॥
स्नानार्थं विप्रमायान्तं देव्यः पितृगणैः सह। वायुभूताहि ग
च्छंति तृषार्त्ताः सलिलार्थिनः ॥ निराशास्ते निवर्त्तन्ते वस्त्रनि
ष्पीडने कृते। तस्मान्न पीडयेद्वस्त्रमकृत्वा पितृतर्पणम् ॥ वि
धुनोति हि यः केशान् स्नातः प्रस्रवतो द्विजः। आचामेद्वा जल
स्थोऽपि स बाह्यः पितृदैवतैः ॥ शिरः प्रावृत्य कं बद्धा मुक्तक-
च्छशिखोऽपि वा। विना यज्ञोपवीतेन आचान्तोऽप्यशुचिर्भ-
वेत् ॥ जले स्थलस्थो नाचामेज्जलस्थश्च बहिः स्थले। उभे स्पृ
ष्ट्वा समाचान्त उभयत्र शुचिर्भवेत् ॥ स्नात्वा पीत्वा क्षुते सु
प्ते भुक्ते रथ्योपसर्पणे। आचान्तः पुनराचामेद्वासोविपरिधाय
च ॥ क्षुते निष्ठीविते चैव दन्तोच्छिष्टे तथानृते। पतितानाञ्च स
म्भाषे दक्षिणं श्रवणं स्पृशेत् ॥ ब्रह्मा विष्णुश्च रुद्रश्च सोमः सू-
र्य्योऽनिलस्तथा। ते सर्वे ह्यपि तिष्ठन्ति कर्णे विप्रस्य दक्षिणे ॥
दिवाकरकरैः पूतं दिवास्नानं प्रशस्यते। अप्रशस्तं निशि स्ना
नं राहोरन्यत्र दर्शनात् ॥ मरुतो वसवो रुद्रा आदित्याश्चादि-
देवताः। सर्वे सोमे विलीयन्ते तस्मात् स्नानन्तु तद्ग्रहे ॥ खलय-
ज्ञे विवाहे च संक्रान्तौ ग्रहणेषु च। शर्वर्य्यां दानमेतेषु नान्यत्र

ति विनिश्चयः ॥ पुत्रजन्मनि यज्ञे च तथा चात्ययकर्मणि । रा
होश्च दर्शने दानं प्रशस्तं नान्यदा निशि ॥ महानिशा तु विज्ञे
या मध्यस्थप्रहरद्वयम् । प्रदोषपश्चिमौ यामौ दिनवत् स्नान
माचरेत् ॥ चैत्यवृक्षश्चितिस्थश्च चण्डालः सोमविक्रयी । एता
स्तु ब्राह्मणः स्पृष्ट्वा सवासा जलमाविशेत् ॥ अस्थिसञ्चय-
नात् पूर्वं रुदित्वा स्नानमाचरेत् । अन्तर्दशाहे विप्रस्य पूर्वमाच
मनं भवेत् ॥ सर्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे । सोमग्रहे
तथैवोक्तं स्नानदानादिकर्मसु ॥ कुशपूतन्तु यत्स्नानं कुशेनोपस्
शेद्द्विजः । कुशेनोद्धृततोयं यत् सोमपानसमं स्मृतम् ॥ अग्निका
र्य्यात् परिभ्रष्टाः सन्ध्योपासनवर्जिताः । वेदञ्चैवानधीयानाः
सर्वे ते वृषलाः स्मृताः ॥ तस्माद्वृषलभीतेन ब्राह्मणेन विशेषतः
अध्येतव्योऽप्येकदेशो यदि सर्वं न शक्यते ॥ शूद्रान्नरसपुष्ट-
स्याप्यधीयानस्य नित्यशः । जपतो जुह्वतो वापि गतिरुक्ता
नविद्यते ॥ शूद्रान्नं शूद्रसम्पर्कः शूद्रेण तु सहासनम् । शूद्राज्ज्ञा
नागमश्चापि ज्वलन्तमपि पातयेत् ॥ मृतसूतकपुष्टाङ्गोद्विजः
शूद्रान्नभोजने । अहं तां न विजानामि कां कां योनिं गमिष्य-
ति ॥ गृध्रो द्वादश जन्मानि दश जन्मानि शूकरः । श्वयोनौ स
प्तजन्म स्यादित्येवं मनुरब्रवीत् ॥ दक्षिणार्थं तु यो विप्रः शूद्र
स्य जुहुयाद्धविः । ब्राह्मणस्तु भवेच्छूद्रः शूद्रस्तु ब्राह्मणो भ
वेत् ॥ मौनव्रतं समाश्रित्य आसीनो न वदेद्द्विजः । भुञ्जानो हि
वदेद्यस्तु तदन्नं परिवर्जयेत् ॥ अर्द्धं भुक्ते तु यो विप्रस्तस्मिन्
पात्रे जलं पिबेत् । हतं दैवञ्च पित्र्यञ्च आत्मानञ्चोपघातयेत् ॥
भाजनेषु च तिष्ठत्सु स्वस्ति कुर्वन्ति ये द्विजाः । न देवा स्तृप्तिमा
यान्ति निराशाः पितरस्तथा ॥ गृहस्थस्तु यदा युक्तो धर्ममे-
वानुचिन्तयेत् । पोष्यधर्मार्थसिद्ध्यर्थं न्यायवर्त्ती सुबुद्धिमान् ॥

न्यायोपार्जितवित्तेन कर्तव्यं ज्ञानरक्षणम्। अन्यायेन तु यो जीवेत् सर्वकर्मबहिष्कृतः॥ अग्निचित् कपिला सत्री राजा भिक्षुर्महोदधिः। दृष्टमात्रं पुनन्त्येते तस्मात् पश्येत्तु नित्यशः॥ अरणिं कृष्णमार्जारश्चन्दनं सुमणिं घृतम्। तिलान् कृष्णाजिनं छागं गृहे चैतानि रक्षयेत्॥ गवां शतं सैकवृषं यत्र तिष्ठत्ययन्त्रितम्। तत्क्षेत्रं दशगुणितं गोचर्म परिकीर्त्तितम्॥ ब्रह्महत्यादिभिर्मर्त्यो मनोवाक्कायकर्मजैः। एतद्गोचर्मदानेन मुच्यते सर्वकिल्बिषैः॥ कुटुम्बिने दरिद्राय श्रोत्रियाय विशेषतः। यद्दानं दीयते तस्मै तदायुर्वृद्धिकारकम्॥ आषोडशादिनादर्वाक् स्नानमेव रजस्वला। अतऊर्द्ध्वं त्रिरात्रं स्यादुशना मुनिरब्रवीत्॥ युगं युगद्वयञ्चैव त्रियुगञ्च चतुर्युगम्। चाण्डालसूतिकोदक्यापतितानामधः क्रमात्॥ ततः सन्निधिमात्रेण सचेलं स्नानमाचरेत्। स्नात्वावलोकयेत् सूर्य्यमज्ञानात् स्पृशते यदि॥ वापीकूपतडागेषु ब्राह्मणो ज्ञानदुर्बलः। तोयं पिबति वक्त्रेण श्वयोनौ जायते ध्रुवम्॥ यस्तु क्रुद्धः पुमान् भार्य्यां प्रतिज्ञायाप्यगम्यताम्। पुनरिच्छति ताङ्गन्तु विप्रमध्ये तु श्रावयेत्॥ श्रान्तः क्रुद्धस्तमोऽन्धान्त्या क्षुत्पिपासाभयार्द्दितः। दानं पण्यमकृत्वा च प्रायश्चित्तं दिनत्रयम्॥ उपस्पृशेत्त्रिषवणं महानद्युपसङ्गमे। चीर्णान्ते चैव गां दद्यात् ब्राह्मणान् भोजयेद्दश॥ दुराचारस्य विप्रस्य निषिद्धाचरणस्य च। अन्नं भुक्त्वा द्विजः कुर्य्याद्दिनमेकमभोजनम्॥ सदाचारस्य विप्रस्य तथा वेदान्तवादिनः। भुक्त्वान्नं मुच्यते पापादहोरात्रन्तु वै नरः॥ ऊर्द्ध्वोच्छिष्टमधोच्छिष्टमन्तरिक्षमृतौ तथा। कृच्छ्रत्रयं प्रकुर्व्वीत आशौचमरणे तथा॥ कृच्छ्रदेव्ययुतञ्चैव प्राणायामशतत्रयम्। पुण्यतीर्थे नार्द्रशिरः स्नानं द्वाद

शसंख्यया। द्वियोजनं तीर्थयात्रा कृच्छ्रमेवं प्रकल्पितम्॥ गृहस्थः कामतः कुर्य्याद्रेतसः सेचनं भुवि। सहस्रन्तु जपेद्देव्याः प्राणायामैस्त्रिभिः सह॥ चातुर्वैद्योपपन्नस्तु विधिवद्ब्रह्मघातके। समुद्रसेतुगमनप्रायश्चित्तं विनिर्द्दिशेत्॥ सेतुबन्धपथे भिक्षां चातुर्वर्ण्यात् समाचरेत्। वर्जयित्वा विकर्मस्थांश्छत्रोपानद्विवर्जितः॥ अहं दुष्कृतकर्मा वै महापातककारकः। गृहद्वारेषु तिष्ठामि भिक्षार्थी ब्रह्मघातकः॥ गोकुलेषु वसेच्चैव ग्रामेषु नगरेषुच। तथा वनेषु तीर्थेषु नदीप्रस्रवणेषु च॥ एतेषु ख्यापयन्नेनः पुण्यं गत्वा तु सागरम्। दशयोजनविस्तीर्णं शतयोजनमायतम्॥ रामचन्द्रसमादिष्टं नलसञ्चयसञ्चितम्। सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति। यजेत वाश्वमेधेन राजा तु पृथिवीपतिः॥ पुनः प्रत्यागतो वेश्म वासार्थमुपसर्पति। सपुत्रः सह भृत्यैश्च कुर्य्याद्ब्राह्मणभोजनम्॥ गाश्चैवैकशतं दद्याच्चातुर्वेद्येषु दक्षिणाम्। ब्राह्मणानां प्रसादेन ब्रह्महा तु विमुच्यते॥ सवनस्थां स्त्रियं हत्वा ब्रह्महत्याव्रतं चरेत्। मद्यपश्च द्विजः कुर्य्यान्नदीं गत्वा समुद्रगाम्॥ चान्द्रायणे ततश्चीर्णे कुर्य्याद्ब्राह्मणभोजनम्। अनडुत्सहितां गाञ्च दद्याद्विप्रेषु दक्षिणाम्॥ अपहृत्य सुवर्णन्तु ब्राह्मणस्य ततः स्वयम्। गच्छेन्मुषलमादाय राजाभ्यासं वधाय तु॥ ततः शुद्धिमवाप्नोति राज्ञासौ मुक्तएवच। कामकारकृतं यत् स्यान्नान्यथा वधमर्हति॥ आसनाच्छयनाद्यानात् सम्भाषात् सहभोजनात्। संक्रामति हि पापानि तैलबिन्दुरिवाम्भसि॥ चान्द्रायणं यावकञ्च तुलापुरुष एवच। गवाञ्चैवानुगमनं सर्वपापप्रणाशनम्॥ एतत् पाराशरं शास्त्रं श्लोकानां शतपञ्चकम्। द्विनवत्या समायुक्तं धर्मशास्त्र

स्य संग्रहः॥ यथाध्ययनकर्माणि धर्मशास्त्रमिदं तथा। अध्येतव्यं प्रयत्नेन नियतं स्वर्गगामिना॥ ॥ इति पाराशरे धर्मशास्त्रे द्वादशोऽध्यायः॥

समाप्ता चेयं पराशरसंहिता॥

---

## अथ बृहत्पराशरसंहितायाम्।

व्यक्ताव्यक्ताय देवाय वेधसेऽनन्ततेजसे। नमस्कृत्वा प्रवक्ष्यामि धर्मान् पाराशरोदितान्॥ अथातो हिमशैलाग्रे देवदारुवनाश्रमे। व्यासमेकाग्रमासीनमृषयः प्रष्टुमागताः॥ मानुषाणां हितं धर्मं वर्त्तमाने कलौ युगे। वर्णानामाश्रमाणाञ्च किञ्चित्साधारणं वद॥ युगे युगेषु ये प्रोक्ता धर्मा मन्वादिभिर्मुने!। वाक्यं तेनैव ते कर्त्तुं वर्णैराश्रमवासिभिः॥ स पृष्टो मुनिभिर्व्यासो मुनिभिः परिवेष्टितः। प्रष्टुं जगाम पितरं धर्मान् पाराशरं ततः॥ सर्वेषामाश्रमाणाञ्च वरे बदरिकाश्रमे। स विवेशाश्रमे तस्मिन् तनुं योगीव वेधसः॥ नानापुष्पलताकीर्णे फलपुष्पैरलङ्कृते। नदीप्रस्रवणानेकैः पुण्यतीर्थोपशोभिते॥ मृगपक्षिभिराकीर्णे देवतायतनावृते। यक्ष गन्धर्व सिद्धैश्च नृत्यगीतसमाकुले॥ तस्मिन्नृषिसभामध्ये शक्तिपुत्रः पराशरः। सुखासीनो महातेजा मुनिमुख्यगणावृतः॥ कृताञ्जलिपुटो भूत्वा व्यासस्तु मुनिभिः सह। प्रदक्षिणाभिवादैश्च मुनिभिः प्रतिपूजितः॥ ततः सन्तुष्टमनसा पाराशरमहामुनिः। व्यासस्य स्वागतं ब्रूयात् आसीनो मुनिपुङ्गवः॥ वशास्य स्वागतं तेन आसीनानां समन्ततः। कुशलं कुशलेत्युक्त्वा व्यासः पृच्छत्ततः परम्॥ यदि जानासि मां भक्तं स्नेहोवा यदि व

त्सलः। धर्मं कथय मे तात! अनुग्राह्योऽस्म्यहं यदि॥ श्रुतास्तु मानवा धर्मा गार्गीया गौतमास्तथा। वाशिष्ठाः काश्यपाश्चै-व तथा गोपालकस्य च॥ आत्रेया विष्णुसम्वर्त्ता दाक्षाश्चाङ्गिरसस्तथा। शातातपाश्च हारीतयाज्ञवल्क्यकृतास्तथा॥ आपस्तम्बकृता धर्माः सशङ्खलिखितास्तथा। कात्यायनकृ-ताश्चैव प्रचेतसकृतास्तथा॥ श्रुतिरात्मोद्भवा तात! श्रुत्यर्था मानवाः स्मृताः। मन्वर्थं सर्वधर्माणां कृतादि त्रियुगेषु च॥ धर्मन्तु त्रियुगाचारं स शक्यन्तु कलौ युगे। वर्णानामाश्रमाणाञ्च किञ्चित्साधारणं वद॥ व्यासवाक्यावसानेतु मुनिमुख्यः पराशरः। सुखासीनो महातेजा इदं वचन मब्रवीत्॥ क्रियन्ते नैव वेदाश्च नैवाति प्रभवन्ति ते। न कश्चिद्वेदकर्त्तास्ति वेदस्मर्त्ता चतुर्मुखः॥ तथा सधर्मं स्मरति कल्पे कल्पान्तरान्तरे। अन्ये कृतयुगे धर्मा स्त्रेतायां द्वापरे परे॥ अन्ये कलियुगे नृणां युगह्रासानुरूपतः। तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते॥ द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे। कृते तु मानवा धर्मा स्त्रेतायां गौतमस्य च॥ द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत्॥ द्वापरे कुलमेकन्तु कर्त्तारञ्च कलौ युगे। कृते सम्भाष्य पतिते स्त्रेतायां स्पर्शनेन च॥ द्वापरे भक्षणेऽन्नस्य कलौ पतति कर्मणा। अभिगम्य कृते दानं त्रेतामाहूय दीयते॥ द्वापरे याच्यमानन्तु सेवया दीयते कलौ। अभिगम्योत्तमन्दानं आहूतञ्चैव मध्यमम्॥ अधमं याच्यमानं स्यात् सेवादानञ्च निष्फलम्। कृते त्वस्थिगताः प्राणा स्त्रेतायां मांस मेव च॥ द्वापरे रुधिरं यावत्कलौ त्वन्नाद्यमेव च। कृते तात्क्षणिकः शाप स्त्रेतायां दशाभिर्दिनैः॥ मासेन द्वापरे ज्ञेयः कलौ सम्वत्सरेण तु। युगे युगेषु ये धर्मा

स्तेषु धर्मेषु ये द्विजाः॥ ते द्विजा नावमन्तव्या युगरूपा द्विजो त्तमाः। धर्मश्च सत्यमायुश्च तुर्य्यांशेन कलौ युगे॥ अदानात्त दनघस्य तुच्छमासुरकार्य्यतः। धर्मश्च लोकदम्भार्थं पाषण्डा र्थं तपस्विनः॥विविधा वाग्वञ्चनार्थं कलौ सत्यानुसारिणी।अ ल्पक्षीरघृता गावो ह्यल्पसस्या च मेदिनी॥ स्त्रीजनस्य स्त्रियः सर्वा रत्यर्थं कृतमैथुनाः। पुरुषाश्च जिताः स्त्रीभी राजानो दस्यु भिर्जिताः॥जितो धर्मश्च पापेन अनृतेन तथा ऋतम्। शूद्राश्च ब्राह्मणाचाराः शूद्राचारा स्तथा द्विजाः॥अन्त्यानुयायिनश्चा- द्या वर्णास्तदुपजीविनः। कृतन्तु ब्राह्मणयुगं त्रेता तु क्षत्रियं यु गम्॥ वैश्यन्तु द्वापरयुगं कलिः शूद्रयुगं स्मृतम्। चातुर्वर्णिकनारी णां तथा तूरीयजन्मनी॥ यतिद्विजाभ्युपास्त्यादि धर्मर्द्धि र्महती कलौ। शते नयाकृते दत्ते फलाप्तिः पुरुषस्य सा॥ दत्तेषु दशभि र्नृणां फलाप्तिः स्यात् कलौ युगे। युगस्वरूपमाख्यातमन्यं नि- गदतः शृणु॥ वर्णानामाश्रमाणाञ्च सर्वेषां धर्मसाधनम्। मृगः कृष्णश्चरेद्यत्र स्वभावेन महीतले॥ वसेत्तत्र द्विजातिस्तु शूद्रो य त्र तु तत्र तु। हिमपर्वतविन्ध्याद्रौ विनाशेन प्रयागयोः॥ मध्ये तु पावनो देशो म्लेच्छदेशस्ततः परम्। देशेष्वन्येषु या नद्यो ध- न्याः सागरगाः शुभाः॥ तीर्थानि यानि पुण्यानि मुनिभिः सेवि तानि च। वसेयु स्तदुपान्तेऽपि समिच्छन्तो द्विजातयः॥मुनि- भिः सेवितत्वाच्च पुण्यदेशः प्रकीर्त्तितः। यत्र पानं नपेयस्य देशे ऽभक्ष्यस्य भक्षणम्॥ अगम्यागामिता यत्र तं देशं परिवर्जयेत्। एवं देशः समाख्यातो यज्ञीय स्तु द्विजन्मनाम्॥ एव मेवानुवर्त्ते रन्देशं धर्मानुकाङ्क्षिणः। वसन्वा यत्र तत्रापि स्वाचारं न विवर्ज येत्॥ षट्कर्माणि च कुर्वीरन् इति धर्मस्य निश्चयः। पराशरः स्वयम्प्राह शास्त्रं पुत्रस्य वत्सलः॥ अथातः सम्प्रवक्ष्यामि द्वि-

जकर्मादिकं द्विजाः ।। षट्कर्म वर्ण धर्मश्च प्रशंसा गो वृषस्य च॥ अदोह्यवाह्यो यो तत्र क्षीरं क्षीरप्रयोक्षिणा। अमावास्या निषिद्धानि ततश्च पशुपालनम् ॥ अन्नतोयप्रशंसा च वाह्या वाह्या वसुन्धरा। अर्थार्थकृषतोऽपापं तदप्यस्यापि शोधनम्॥ बर्हिं सिता मरवश्चापि विवाहः कन्यका वराः। स्त्रीषु धर्मो म-स्वः पञ्च द्विजातिस्वर्गसाधनात्॥ विधिः प्राणोऽग्निहोत्रस्य आधानादिकसंस्कृतिः। व्रतचर्य्यादि तद्धर्माः प्रशंसा पुत्रजन्मनः ॥ कृत्स्नो गृहस्थधर्मश्च भक्षाभक्षं तथैव च। निषिद्ध वस्तुकथनं पात्रशुद्धि स्तथा पुनः ॥ द्रव्याणाञ्च तथाशुद्धिरुपाकर्माणि कर्म च अनध्याया स्तथा श्राद्धं विप्राः! कालहविर्युतम् ॥ बलिर्नाराय णीयश्च सूतकाशौच मेव च। परिषत्प्रायश्चित्तानि तद्व्रतानि य था द्विजाः॥ विधिवत्सर्वदानानि तेषाञ्चैव फलानि च। भूमिदा नप्रशंसा च विशेषो विप्रकालयोः ॥ इष्टापूर्त्तौ तथा विद्वन्! पृथक् तयोः फलानि च। प्रतिग्रहविधि स्तद्वद्यथा तस्य प्रतिग्रहः ॥ वि नायकादिशान्तीनां विधयश्च द्विजोत्तमाः!। वानप्रस्थस्य ध-र्मोऽपि तथा धर्मो यतेरपि॥ चतुराश्रमभेदोऽपि वपुर्निन्दा त थैव च। योगोऽर्चिर्धूमयोर्मार्गौ कालं रुद्रान्त मेव च॥ दृष्टश्च-तत्परं ध्येयं सर्वमेतत् पराशरः। प्रोक्तवान् व्यासमुख्यानां शेषं मुनिविभाषितम् ॥ नियुक्तः सुव्रतः शेषं विप्राणां ख्यापनाय-च। पराशरो व्यास वचो निशम्य यदाह शास्त्रं चतुराश्रमार्थम्। युगानु रूपञ्च समस्तवर्णा हिताय वक्ष्यत्यथ सुव्रतस्तत् ॥ श क्तिसूनो रनुज्ञातः सुतपाः सुव्रतस्त्विदम्। चतुर्वर्णाश्रमाणाञ्च हितं शास्त्र मथाब्रवीत् ॥ ॥ इति श्रीबृहत्पाराशरीये धर्म शास्त्रे व्यासप्रश्ने शास्त्रसंग्रहोद्देशकथनं नाम प्रथमोऽध्या-यः ॥१॥

पराशरमतं पुण्यं पवित्रं पापनाशनम। चिन्तितं ब्राह्मणार्थाय धर्मसंस्थापनाय च॥ चतुर्णामपि वर्णाना माचारो धर्मपालनम्। आचारभ्रष्टदेहानां भवेद्धर्म पराङ्मुखः॥षट्कर्माभिरतो नित्यं देवतातिथिपूजकः। हुतशेषन्तु भुञ्जानो ब्राह्मणो नावसीदति॥ कर्माणि कानीह कथञ्चितानि कार्याणि वर्णैश्च किमाद्यकानि। तेषा मनेहाकरणे विधिश्च सर्वं प्रसादात्तनुष्व मह्यम्॥ कर्मषट्कं प्रवक्ष्यामि यत् कुर्वन्ति द्विजातयः। गृहस्था अपि मुच्यन्ते संसारे बन्धहेतुभिः॥ यथोद्देशक्रमं शास्त्रं यच्छ्रुतं श्रुतिहर्षकृत्। तदुक्तं कर्म तत् पुंसां शृणुध्वं पापनाशनम्॥ सन्ध्या स्नानं जपश्चैव देवतानाञ्च पूजनम्। वैश्वदेवं तथातिथ्यं षट् कर्माणि दिने दिने॥ सन्ध्यामथ प्रवक्ष्यामि देवताकालनामभिः। वर्णर्षिच्छन्दसा युक्तं यद्विधानं यथार्चनम्॥ यावन्मन्त्रा यथोपास्ति रुपस्पर्शनमेव च। आवाहनं विसर्गञ्च यावन्मानं क्रमेणतु॥ दिवसस्य च रात्रेश्च सन्ध्यः सन्ध्येति कीर्तिता॥ सोपास्या सा द्विजैर्यत्नात् स्यात्तैर्विश्वमुपासितम्। मध्याह्नेऽपि च सन्धिः स्यात् पूर्वस्याह्नः परस्परम्॥ पूर्वाह्णो ह्यपराह्णस्तु क्षये चेति श्रुतिक्रमात्। पूर्वसन्ध्या तु गायत्री।ब्रह्मणो हंसवाहना॥ रक्तपद्मारुणा देवी रक्तपद्मासनस्थिता। रक्ताभरणभासाङ्गा रक्तमाल्याम्बरा तथा॥ अक्षमालाध्रुवा धारा चारुहस्ताऽमरार्चिता। प्रागादित्योदयाद्विद्वान् मुहूर्ते वैधवे सति॥ उत्थायोपासयेत्सन्ध्यां यावत्स्यादर्कदर्शनम्। विश्वमातः! स्मराभ्यर्च्ये! पुण्ये! गायत्रि! वेधसि॥आवाहयाम्युपास्त्यर्थं एह्येनोऽस्ति पुनीहि माम्। सन्ध्या माध्याह्निका श्वेता सावित्री रुद्रदेवता॥ वृषेन्द्रवाहना देवी बालभिशिखधारिणी। श्वेताम्बरधरा श्वेता नानाभरणभूषिता॥

श्वेतस्त्रगक्षमालापि कृतोनुरक्तशङ्करा । जलाधारा धरा धात्री धरेन्द्राङ्कभवाभवा ॥ स्वभाविभातभूराद्या सुरौघनुतपाहूया । मातर्भवानि ! विश्वेशि ! विश्वविश्वजनार्चिते !॥ शुभे ! वरे ! वरेण्या हि आहूता हि पुनीहि माम् ॥ सन्ध्या सायन्तनी कृष्णा विष्णुदेवा सरस्वती । स्वर्गगा कृष्णवस्त्रा तु शङ्खचक्रगदाधरा ॥ कृष्णाभ्रूभूषणैर्युक्ता सर्वज्ञानमया वरा । सर्ववाग्देवता सर्वा ब्रह्मादिवचसि स्थिता ॥ वीणाक्षमालिका चारुहस्ता स्मिता वरानना । चतुर्दशजनाभ्यर्च्या कल्याणी शुभकप्रदा ॥ मातर्वाग्देवते ! देवि ! वरेण्ये ! च वरप्रदे ! । सर्वमरुद्गणस्तुत्ये ! आहूते ! हि पुनाहि माम् ॥ ब्रह्मेशार्कहरीणान्तु सङ्गमोऽस्तूभयोर्भवेत् । माध्याह्निकायां सन्ध्यायां सर्वदेवसमागमः ॥ पूजाभिकाङ्क्षिणो येच येच किञ्चिज्जलार्थिनः । आज्यान्नभागधेया ये ये चाग्निहुतभागिनः ॥ अन्यान्युच्चावचानीह स्थावराणि चराणि च माध्याह्निकामुपेक्षन्ते तेषामाप्यायिका हि सा ॥ यस्तस्यां नार्चयेद्देवान् तर्पयेत पितॄंस्तथा । भूतान्युच्चावचानीह सोऽन्धतामिस्रमृच्छति ॥ ईशान्याभिमुखो भूत्वा द्विजः पूर्वमुखोऽपि वा । सन्ध्यामुपासयेद्यद्वत्तथावत्तन्निबोधत ॥ आमणेर्वन्धनाद्धस्तौ पादौ चाजानुतः शुचिः । प्रक्षाल्य ह्याचमेद्विद्वान्नन्तर्जानुकरो द्विजः ॥ निर्मलात् फेनपूताभि र्मनोज्ञाभिः प्रयत्नवान् । आचमेद्ब्रह्मतीर्थेन पुनराचमनाच्छुचिः ॥ वक्त्रनिमार्जनं कृत्वा हस्तेनैवाधराण्यथा । अद्भिश्च संस्पृशेत् खानि सर्वाण्यपि विशुद्धयेत् ॥ अङ्गुष्ठेन प्रदेशिन्या सव्यपाणिस्थवारिणा । घ्राणं संस्पृश्य नेत्रं च तेन नासिकया श्रुती ॥ नाभिञ्च तत्कनिष्ठाभ्यां वक्षः करतलेन च । शिरः सर्वाभिरंसौ च अङ्गुल्यग्रैश्च संस्पृशेत् ॥ अनम्य प्राणसंरोधं कृत्वा चोपस्पृशेत्पुनः । अत्रोपस्पर्शने मन्त्र

प्रातः केचित्पठन्ति हि॥ सूर्यश्च मेति मध्याह्ने पुनस्त्वापो विपर्ययम्। मन्त्राभिमन्त्रितं कृत्वा कुशपूतञ्च तज्जलम्॥ आचम्य विधिवद् धीमान् सन्ध्योपासन माचरेत्॥ सोङ्कारां चैव गायत्रीं जप्त्वा व्याहृतिपूर्वकम्। आपोहिष्ठादि जल्पन्ति च्छन्दोदेवर्षिपूर्वकम्॥ छन्दोभिर्विनियोगेश्च मन्त्रब्राह्मणसंयुतम्। एतद्धीनं न कुर्वीत कुर्य्यात् ह्येनत्तदासुरम्॥ मृत्युभीतैः पुरा देवैरात्मनश्छादनाय च। च्छन्दांसि संस्मृतानीह च्छादितास्तैरतोऽमराः॥ च्छादनाच्छन्द उद्दिष्टं वाससी कृत्तिरेव वा। च्छन्दोभिरावृतं सर्वं विद्यां सर्वत्र नान्यतः॥ यस्मिन्मन्त्रे तु ये देवा स्तेन मन्त्रेण चिह्नितम्। मन्त्रं यद्दैवतं विद्यात् सवितुस्तत्र देवता॥ येन यदृषिणा दृष्टं सिद्धिः प्राप्ता तु येन वै। मन्त्रेण तस्य संप्रोक्तो मुनेर्भावस्तदात्मकः॥ यत्र कर्मणि चारब्धे जपहोमार्चनादिके। क्रियते येन मन्त्रेण विनियोगस्तु स स्मृतः॥ अस्य मन्त्रस्य चार्थोऽयमयं मन्त्रोऽनुवर्त्तते। तत्तस्य ब्रह्मणाज्ञेयं मन्त्रस्येति श्रुतिक्रमः॥ एतद्धि पञ्चकं ज्ञात्वा क्रियते कर्म यद् द्विजैः। तदनन्तफलं तेषां भवेद्वेदनिदर्शनात्॥ अकामेनापि यन्न्यूनं कुर्य्यात् कर्म द्विजोऽपि यः। तेनासौ हन्यते कर्त्ताऽमृतो गन्ताधमृच्छति॥ कुर्वन्नज्ञो द्विजः कर्म जपहोमादि कञ्चन। नासौ तस्य फलम्विन्देत् कर्ममात्रं हि तस्य तत्॥ आपद्यते स्थाणुगर्ते स्वयं वापि प्रलीयते। यातयामानि च्छन्दांसि भवन्त्यफलदान्यपि॥ सिन्धुद्वीप ऋषिच्छन्दो गायत्री मृक्षु तिसृषु। आपो हि दैवतं प्राहु रापोहिष्ठादिषु द्विजाः॥ गोभिलो राजपुत्रस्तु द्रुपदायामृषिर्भवेत्। अनुष्टुभं भवेच्छन्द आपश्चैव तु दैवतम्॥ सौत्रामपावभृतके विनियोगस्य कल्पितः॥ उदुत्यमृषिः प्रस्कण्वो गायत्र्यं सूर्य्यदेवता। चित्रमित्यत्र कुत्सस्तु शर्वरी सूर्य्यदेवता॥ प्रणवो भूर्भुवः स्वश्च गा

यत्र्याप ऋचा त्रयम् ॥ अघमर्षणसूक्तस्य ऋषिरेवाघकर्मणा। च्छन्दोऽथानुष्टुभं प्राहुरापश्चैव तु दैवतम् ॥ द्रुपदाघमर्षणं सूक्तं मार्जने व्याहरेदिति । स्मृतिभिः परिशिष्टैश्च विशेषस्तोयसेचने ॥ उल्काज्योर्द्धं विभागेन कर्तव्यः सोऽपि स द्विजैः । आपो हिष्ठेति त्रिऋचं अष्टाक्षरपदं नच ॥ पादान्ते प्रक्षिपेद्वापि पादमध्येन च क्षिपेत् । भूमौ मूर्ध्नि तथाकाशे मूर्ध्न्याकाशे तथा भुवि॥ एवं वारि द्विजः सिञ्चन् तर्पयेत् सर्वदेवताः । उदुत्यञ्चित्रं देवानामुपस्थाने नियोजयेत् ॥ हंसः शुचिः सदित्यादि केचिदिच्छन्ति सूरयः। अव्याकृतमिदं ह्यासीत् सदेवासुरमानुषम् ॥ संक्षेपायासृजद् ब्रह्मा सप्तमा व्याहृतीः पुरा । भूर्भुवः स्वर्मह र्जनस्तपःसत्यं तथैव च ॥ आद्यास्तिस्रो महाप्रोक्ताः सर्वत्रैव नियोजनात् । अग्निर्वायुस्तथा सूर्य्यो बृहस्पत्याप एव च ॥ इन्द्रश्च विश्वदेवाश्च देवताः समुदाहृताः । गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥ त्रिष्टुप् च जगती चैव च्छन्दांस्येतान्यनुक्रमात्। भरद्वाजः कश्यपश्च गौतमोऽत्रिस्तथैव च ॥ विश्वामित्रो जमदग्निर्वशिष्ठश्च ऋषिः क्रमात् । एताभिः सकलं व्याप्तमेताभ्यो नास्ति चापरम् ॥ सप्तैते स्वर्गलोका वै सत्यादूर्द्ध्वन्न विद्यते। तस्माल्लोकात्परा मुक्ति रर्व्वाचीना पदेक्षया ॥ प्राणसंयमनेष्वेता अभ्यस्याः पूर्वकादिभिः । ॐमापोज्योतिरित्येतच्छिरः पश्चात्प्रयुज्यते ॥ प्रत्योङ्कारसमायुक्तो मन्त्रोऽयं तैत्तिरीयके । अत्रोङ्कारवदार्षादि विदु र्ब्रह्मविदो जनाः ॥ प्रणवाद्यन्त गायत्री प्राणायामेष्वयं विधिः । गायत्र्यादिकचित्रान्ते र्मन्त्रैश्च प्रागुदीरितैः ॥ उपासीरन्द्विजास्तावद्यावन्नोदेति भास्करः । गवां बालपवित्रेण यस्तु सन्ध्यामुपासते ॥ सर्वतीर्थाभिषेकं तु लभते नात्र संशयः । गोवालदर्भसारञ्च खड्गं कनकमेव च ॥ दर्भताम्रतिलं

वापि एतैस्तर्पणकृद्द्विजाः। स सन्तर्प्य पितॄन्देवानात्मानं त्रिदिवं नयेत्॥ त्रिंशत्कोट्यस्तु विख्याता मन्देहा नाम राक्षसाः उद्यन्तं ते विवस्वन्तं बलादिच्छन्ति खादितुम्॥ दिने दिने सहस्रांशु रप्युक्तैस्तैरभिद्रुतः। भानुर्दीनः कृतस्तूर्णं तद्दृश्यत्वामिहागतः॥ अतस्तस्य च तेषान्तु ह्यभूद्युद्धं सुदारुणम्। किं भविष्यति युद्धेऽस्मिन् नित्यभूसुरविस्मयः॥ अरुणस्य च ये बाणा यह्वलन्तो विवस्वतः। विलक्ष्यास्ते निवर्त्तन्ते मन्देहानामदर्शनात्॥ रवेरप्यंशवो ह्यस्मात् यातायाता ह्यशक्तितः। अप्राप्तावशरीराणां स्वामिनैव लयङ्गताः॥ हेषाशब्दमकुर्व्वाणाः शफस्फुरणवर्जिताः। स्तब्धाङ्गा निर्जयाज्जाताः सूर्य्यस्यन्दनवाजिनः॥ ततो देवगणाः सर्वे ऋषयश्च तपोधनाः। यत्सन्ध्यान्ते उपासीत प्रक्षिपन्ति जलं महत्॥ ॐकारब्रह्मसंयुक्तं गायत्र्या चाभिमन्त्रितम्। दह्येरंस्तेन ते दैत्या वज्रीभूतेन वारिणा॥ सहस्रांशुरथे तिष्ठन् योऽधीयानश्च तु श्रुतीः। याज्ञवल्क्यः समीक्षेत ऋषीशानुक्तवांस्ततः॥ सत्वे त्वनुदिवादित्ये सन्ध्योपास्तिकरो भवेत्। उदिते सति या सन्ध्या बालक्रीडोपमा च सा॥ सन्ध्या येन न विज्ञाता ज्ञात्वा नैव ह्युपासिता। स जीवन्नेव शूद्रश्च ह्याशु गच्छति सान्वयः॥ मान्त्रं पार्थिवमाग्नेयं वायव्यं दिव्यमेव च। वारुणं मानसञ्चेति सप्तैतानु क्रमेण तु॥ शन्न आपस्तु वै मान्त्रं मृदालम्भन्तु पार्थिवम्। भस्मना स्नानमाग्नेयं गोरेणूनामनिलं स्मृतम्॥ आतपे सति या वृष्टि र्दिव्यस्नानं तदुच्यते। बहिर्नद्यादिके स्नानं वारुणं प्रोच्यते बुधैः॥ यत्ध्यानं मनसा विष्णोर्मानसं तत्प्रकीर्त्तितम्। असामर्थ्येन कायस्य कालशक्त्याद्यपेक्षया॥ तुल्यं फलानि सर्वाणि स्फुरत्याह पराशरः। स्नानानां मानसंस्थानं मन्वाद्यैः परमं स्मृतम्॥

कृतेन येन मुच्यन्ते गृहस्था अपितु द्विजाः । नित्यादीनां त्रया णांतु स्नानानामौषसं परम् ॥ सद्यः पापहरं प्राहुः प्राजापत्य व्रताधिकम् । उषस्युषसि यत्स्नानं क्रियतेऽनुदितेऽरवौ ॥प्रा जापत्येन तत्तुल्यं महापातकनाशनम् । प्रातरुत्थाय यो विप्रः प्रातःस्नायी सदा भवेत् ॥ सर्वपापविनिर्मुक्तः परं ब्रह्माधिग-च्छति । अस्नातो नाचरेत्कर्म जपहोमादि किञ्चन ॥ विघ्नन्ते च सु तृप्तानि द्रविणानि क्षरन्ति च । अङ्गानि समतां यान्ति उत्तमान्य धर्मैः सह ॥अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ।स्रव ते च दिवारात्रौ प्रातः स्नानेन शुध्यति ॥उषःस्नानं प्रशंसन्ति सर्वेच पितरोऽमराः । दृष्टादृष्टकरं पुण्यं शंसन्ति पितरोऽपि हि॥ प्रातःस्नायी हि यो विप्रः सोऽर्हः स्यात्सर्वकर्मसु । तत्कृतं कर्म यत्किञ्चित्तत्सर्वं स्याद्यथार्थवत् ॥ अविद्वान् स्नानकालेतु यः कुर्य्याद्दन्तधावनम् । पापीयान् रौरवं याति पितृशापहतो ध्रु वम् ॥ यच्च श्मश्रुषु केशेषु यद्वा देहे च लोमसु । हस्ताभ्याञ्च न वस्त्रेण जलं विद्वान् हि मार्जयेत् ॥ मार्जिते पितरः सर्वे स र्वा अपिच देवताः । तथा सर्वे मनुष्याश्च त्यजेरन् नियतं द्वि जम् ॥ स्नानं सञ्चिन्तितं सर्वे तीर्थे पितृदिवौकसः । ततो न-द्याद्यसौ गच्छन्निराशा स्ते शपन्ति हि ॥ येतु स्नानार्थिन स्ती-र्थे सञ्चिन्तन्ति जलाश्रयाः । तद्देह मुपतिष्ठन्ति तृप्त्यै पितृदिवौ कसः ॥अतो न चिन्तयेत्तीर्थं व्रजेदेवतु चिन्तितम् । देवखातन-दीस्रोतःसरःसु स्नान माचरेत् ॥ स्नानं नद्यादि बन्धेषु सद्भिः कार्यं सदम्बुषु । कृत्रिमन्तोयं कूपस्थं तोयं तत्र तु कृत्रिमम् ॥ न तीर्थे स्त्र्याकुले स्नायान्न सज्जनसमाश्रिते । दर्भहीनोऽन्यचि त्तस्तु न नग्नो न शिरो विना ॥ कदाचिद्विदुषा मिथ्या न स्ना नव्यं पराम्भसा । अम्भः कृद्दुष्कृतांशेन स्नानकर्त्तापि लिप्यते॥

पञ्च वा सप्त वा पिण्डान् स्नायादुद्धृत्य तत्र तु। वृथास्नानादिकानीह विशेषेण विवर्जयेत्॥ वृथा चोष्णोदकस्नानं वृथा जप्यमवैदिकम्। वृथा चाश्रोत्रिये दानं वृथा भुक्तमसाक्षिकम्॥ मासे नभसि न स्नायात्कदाचिन्निम्नगासु च। रजस्वला भवन्त्येता वर्जयित्वा समुद्रगाः॥ नापो मूत्रपुरीषाभ्यां नाग्निर्दहति कर्मणा। न स्त्री दुष्यति जारेण न विप्रो वेदकर्मणा॥ न स्नायात् क्षोभितास्वासु स्वयं न क्षोभयेच्च ताः। न निर्गतासु तीर्थाच्च पतन्तीष्वाहतासु च॥ रविसंक्रान्तिवारेषु ग्रहणेषु शशिक्षये। व्रतेषु चैव षष्ठीषु न स्नायादुष्णवारिणा॥ न स्नायाच्छूद्रहस्तेन नैकहस्तेन वा तथा। उद्धृताभिरपि स्नाया दाहृताभिर्द्विजातिभिः॥ स्वभावाभिरनुष्णाभिः सहसाभिस्तथा द्विजः। नवाभिर्निर्दशाहाभिरसंस्पृष्टाभिरन्त्यजैः॥ यः स्नानमाचरेन्नित्यं तं प्रशंसन्ति देवताः। तस्माद्बहुगुणं स्नानं सदा कार्यं द्विजातिभिः॥ उत्साहाप्यायनस्वान्त प्रशान्ति शक्तिवृद्धिदम्। कीर्ति कान्ति वपुः पुष्टि सौभाग्यायुःप्रवर्धनम्॥ स्वर्गञ्च दशभिर्युक्तं गुणैः स्नानं प्रशस्यते। सूर्य्यादि दिनवारोक्तं तैलाभ्यञ्जनपूर्वकम्॥ हृत्तापकीर्तिमरण सुतस्थानाप्तिमृत्यवः। आयुश्चार्कादिवारेषु तैलाभ्यङ्गे फलं क्रमात्॥ जलावगाहनं नित्यं स्नानं सर्वेषु वर्णिषु। शक्तेरहरहः कार्यं तस्याथ विधिरुच्यते॥ गोशकृन्मृत्कुशाश्चैव पुष्पाणि पत्रिकां तथा। स्नानार्थी प्रयतो नित्यं स्नानकाले सदाहरेत्॥ स्वमनोऽभिमतं तीर्थं गत्वा प्रक्षाल्य पादयोः। हस्तौ चाचम्य विधिवच्छिखाबन्धैकचेतसा॥ मृदम्बुभिश्च गात्राणि क्रमात्प्रक्षालयेद्यथा। पादौ जङ्घे कटीञ्चैव क्रमात्स्नाणं जलैस्त्रिभिः॥ प्रक्षाल्य हस्ता वाचम्य नमस्कृत्य च तज्जलम्। गुह्योपगुह्यं इत्येन यञ्जसा प्रयताञ्जलिः॥ उ

रू देहेतिमन्त्रेच कुर्य्यादापोऽभिमन्त्रिताः । विधिज्ञाः कवयः के
चिन्मन्त्रतत्त्वार्थवेदिनः ॥ यत्र स्थानेषु यत्तीर्थं नदी पुण्यतरा
तथा । तां ध्यायेन्मनसा नित्यमन्यतीर्थं न चिन्तयेत् ॥ गङ्गादि
पुण्यतीर्थानि कृत्रिमादिषु संस्मरेत् । तां ध्यायेन्मनसा वापि
अन्यतीर्थं न चिन्तयेत् ॥ महाव्याहृतिभिः पश्चादाचामेत्प्रय
तोऽपि सन् । उदुत्तम इतिह्यस्तु मन्त्रेण प्राङ्मुखो विशेत् ॥
येऽग्नयो दिवि चेत्ये तत्कुर्य्यादालम्भन न्ततः । सूर्य्यं पश्यन्
जलं मुक्त्वा समुत्तीर्य ततः स्थलम् ॥ आचम्याथ हरेन्मृत्स्नान्त
था कायं समालभेत् । अश्वक्रान्ते रथक्रान्त इत्याद्यपि पठ
न्तिहि ॥ मृत्तिका हरणे चैव इति वाशिष्ठजोऽब्रवीत् । समाल
भेच्चिभिर्मन्त्रै रिदं विष्णवादिभिर्द्विजः ॥ शिरश्चांसा वम्बु ऊरः
पादौ जङ्घं क्रमेण तु । भास्कराभिमुखो मज्जेदापो ह्यस्मानि
ति त्रिभिः ॥ उद्धृत्य सर्वगात्राणि निमज्याथ पुनः पुनः । उत्ती-
र्य्याचम्य गात्राणि गोमयेनाथ लेपयेत् ॥ मानसोक्त इति ह्युक्त्वा
प्राग्वदङ्गक्रमेण तु । इमं मे वरुण ! त्वन्नः सत्यं नय उदुत्तमम् ॥
ऋचं त्ववभृथेत्येनेरात्मान मभिषेचयेत् । निमज्याचम्य चा-
त्मानं दर्भैर्मन्त्रैश्च पावयेत् ॥ हविष्मतीरिमा आप इदमाप-
स्तथैवच । देवीराप इति द्वाभ्यामापो देवीरिती त्यृचा ॥ संस्मृ
त्य द्रुपदां देवीं शन्नो देवीरपां रसम् । प्रत्यङ्ग मन्त्रनवकमापो
देवी पुनन्तु माम् ॥ चिन्तितं मां पुनात्वेतन्मन्त्रेणापि च पावये
त् । हिरण्यवर्णा इति च पावमाना तथापरे ॥ तरत्सममन्दि धाव
न्ति पवित्राण्यानि शक्तितः । स्नानकर्मात्मकैर्मन्त्रै रन्यैरप्यम्बु
दैवतैः ॥ प्लाव्यात्मानं निमज्याथ आचान्तस्त्वन्यदाचरेत् । कार्य
कायप्रदेशानां तथा चैवोदकस्य च ॥ प्राकृत्ये सति चैवायं विधि
रन्यो विपर्यये । सोङ्गराश्चैव गायत्रीं महाव्याहृतिभिः सह ॥

त्रिसप्तै वैकधावर्त्या स्नानाद्विद्वानपि द्विजः। च्छन्दोमन्युं परे र्युक्तं स्वशाखाक्षरसंयुतम्॥ आवर्त्य प्रणवं स्नायाच्छतमर्ध शतं दशम्। चिद्रूपं परमं ज्योतिर्निरालम्बमनामयम्॥ अव्य क्तमव्ययं शान्तं स्नायाद्वापि हरिं स्मरेत्। गायत्री वारिसंस्ना तः प्रणवे निर्मलाकृतः॥ विष्णुस्मरण संशुद्धि स्त्र्यहं सर्वेषु कर्मसु। योऽधीते वेदवेदार्थं सुस्नातः सर्ववारिषु॥ शुद्धेद्स्सुचि नः स्यान्नस्तच्छुद्धस्तु शुचिर्यतः। मन्त्रैश्च मनसा स्नानं नो गो मयमृदम्बुभिः॥ नैभ्वे द्वोरखुर मत्स्याश्च स्नानस्य फलमाप्नुयुः। भाव पूत पवित्रः स्यान्मन्त्रपूत स्तथा नरः॥ उभयेन पवित्रस्तु नित्यस्नायी शुचिर्नरः। विधिदृष्टस्तु यत्कर्म करोतु विधिना- नरः॥ न किञ्चित् फलमाप्नोति कुशमात्रं हि तस्य तत्। उत्पद्य न्ते जले मत्स्या विपद्यन्ते तु तत्र च॥ तिष्ठन्तोऽपि च ते स्नाने फ- लं नैवाप्नुयुर्हताः। विधिहीनं भवेद्दुष्टं कृतमश्रद्धयापि च॥ तद्ध रन्त्य सुरास्तस्य मूढत्वादकृतात्मनः। श्रद्धाविधिसमायुक्तं क र्म यत्क्रियते नृभिः॥ शुचिभिर्ह्येकचित्तैस्तु तदनन्त्याय कल्प्यते। उदात्त मनुदात्तञ्च विसर्गान्तं तथैव च॥ द्रुतञ्च स्वरितोदात्तं स्व रं विन्द्यात्तथा प्लुतम्। स्वरान्तं व्यञ्जनान्तञ्च विसर्गान्तं तथैव च ॥सानुस्वारं पृथक्त्वञ्च ज्ञातमन्यपरं च यत्। वृत्रं शतक्रतुर्हन्ति वज्रेण शतपर्वणा ॥ यथा तथा प्रवक्तारं मन्त्रहीनं स्वरादि- भिः। स्वरतो वर्णतः सम्यक् सन्ध्याध्यानजपादिषु॥ सर्वे म- न्त्राः प्रयोक्तव्याः हीनाः स्युरफला नृणाम्। नाभेरधस्तादङ्गा नि क्षालयित्वा मृदम्भसा॥ उपविष्टः सिक्तवस्त्रे मन्त्रैः प्रोक्ष्य शुचिर्भवेत्। चतुरश्चतुरस्त्वङ्घ्र्यो द्वौ द्वौ च जङ्घयोस्तथा॥ द्वौ द्वौ च जान्वोर्न्यस्य ऊर्वोः पञ्च च पञ्च च। द्वावप्येवं तथा गुह्ये दश द्वादश वक्षसोः॥ द्वौ द्वौ गले च बाह्वोश्च द्वौ द्वे च सु

मुखेष्वपि। द्वौ द्वौ च चक्षुषोः श्रुत्योः सप्तोङ्कारांश्च मूर्द्धनि॥ न्यस्तप्रणवसर्वाङ्गः स्नातः स्यात्सर्ववारिषु। अकारं मूर्ध्नि विन्यस्य उकारं नेत्रमध्यतः॥ मकारं कण्ठदेशेतु ब्रह्मीभवति वै द्विजः। अनङ्गाक्लिष्टधौतेतु विद्वान्न रक्तवाससी॥ परिधाय मृदम्बुभ्यां करौ पादौ च मार्जयेत्। तद्वाससोरसम्पत्तौ-शोणक्षौमाविकानि च॥ कुन्तपं योगपट्टम्वा द्विवासास्तु यथा भवेत्। न जीर्णं नीलकाषायां माञ्जिष्ठेन च वाससा॥ मूत्राद्युपगतेनैव शुचिः स्यान्नेकवाससा। एकं वासो यथा मासं परिधाय मनः शुचिः॥ अन्ये कृत्वोत्तरासङ्गं आचम्य प्राङ्मुखः स्थितः। प्रत्योङ्कारसमायुक्ताः प्रणवाद्युतकास्तथा॥ महाव्याहृतयः सप्त देवतार्षादिसंयुतम्। प्रणवाद्यन्त गायत्र्या तस्याः शिरस्तथैवच॥ त्रिरावर्त्तनमेतस्याः प्राणायामो विधीयते। शक्त्या सुसंयमं कृत्वा तथाचम्य विधानतः॥ उपास्य विधिवत्सन्ध्यामुपस्थाय च भास्करम्। गायत्रीं शक्तितो जप्त्वा तर्पयेद्देवताः पितॄन्॥ अन्वारब्धेन तोयेन पाणिना दक्षिणेन तु। तृप्यतामिति वक्तव्यं नाम्ना तु प्रणवादिना॥ ब्रह्मेशकेशवान् पूर्वं प्रजापतिमथाश्रुतिम्। छन्दो यज्ञानृषीन् सिद्धानाचार्य्यान् स्तनपायिनः॥ गन्धर्ववत्सरर्तूंश्च मासान्दिननिशानि च। देवान्देवानुगांश्चापि नागान् नागकुलानि च॥ सरितः सागरांस्तीर्थान् पर्वतान् कुलपर्वतान्। किन्नरान् खेचरान्यक्षान्मनुष्यान्नथ तर्पयेत्॥ सनकश्च सनन्दश्च तृतीयश्च सनातनः। आसुरिः कपिलश्चैव वोढः पञ्चशिखिस्तथा॥ मानुषान् यातुधानांश्च तेषाञ्चैव कुलान्यपि। सुपर्णाश्च पिशाचांश्च भूतान्यथ पशूंस्तथा॥ वनस्पतींश्चौषधींश्च भूतग्रामं चतुर्विधम्। ब्रह्मादयो मया हूता आगत्य ददतु स्वपः॥

अनृणं मां प्रकुर्वन्तु प्रसीदन्तु ममोपरि। ततः पूर्वाग्रदर्भेषु - साग्रेषु सकुशेषु च॥ प्रादेशिकेषु शुद्धेषु ब्रह्मादिभ्योऽम्बु निक्षिपेत्। अन्वारभ्यापसव्येन पाणिना दक्षिणेन तु॥ दक्षिणं जानु भूलग्नो देवेभ्यः संचयेज्जलम्। देवेभ्यश्च नमः स्वाहा पितृभ्यश्च नमः स्वधा॥ मन्यन्ते कवयः केचिदित्येव तर्पणक्रमः। तर्पमाणेषु कर्मत्वं निजत्वञ्च क्रियापदम्॥ तर्पयामि पितृन्देवानित्याहुरपरे पुनः। सिञ्चमानेन तोयेन मन्यन्ते मुनयोऽपरे॥ देवास्तृप्यन्तु पितरः तृप्यन्त्विति निदर्शनम्। उदीरतामङ्गिरस आयन्तुनोर्जमित्यभि॥ पितृभ्यश्च स्वधायिभ्यो ये चेह नियतास्तथा। अग्निष्वात्तापहूताश्च तथा बर्हिषदोऽपि च॥ येन पूर्वं च पितरः सोमपाना मुदीरयेत्। आवाह्य च पितृनेतैरद्य सव्योपवीतिना॥ दक्षिणाभिमुखो ह्याभ्याङ्गराभ्यामम्बुसेचयेत्। भूलग्न सव्यजानुश्च दक्षिणाग्रकुशेषु च॥ रुक्मरौप्यतिलैस्ताम्रदर्भमन्त्रैः क्षिपेत्पयः। विना रौप्यसुवर्णाभ्याम्विना ताम्रतिलैरपि॥ विना दर्भैश्च मन्त्रैश्च पितृणान्नोपतिष्ठति। दर्भैर्लोहितदर्भैश्च काशवीरणवल्वजैः॥ शुकधान्यतृणैर्वापि दर्भकार्यं श्रयेद्द्विजः। न तर्पयेत्पतन्तीभिर्विद्वान्नद्भिः कथञ्चन॥ पात्रस्थाभिः सदर्भाभिः सतिलाभिश्च तर्पयेत्। वसून्रुद्रांस्तथादित्यान्नमस्कारस्वधान्वितान्॥ एते च दिव्यपितर एतदायत्तमानुषाः। ध्रुवोऽध्वरश्च सोमश्च आपश्चैवानलोऽनिलः॥ प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः। अजैकपाद हि बुध्नीर्विरूपाक्षोऽथ रैवतः॥ हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः। सावित्रश्च जयन्तश्च पिनाकीत्यपराजितः॥ एते रुद्राः समाख्याता एकादश सुरोत्तमाः। इन्द्रो धाता भगः पूषा मित्रोऽथ वरुणोऽर्यमा॥ अंशुर्विवस्वांस्त्वष्टा च

सविता विष्णुरेव च । एते वै द्वादशादित्या देवानां परमाः स्मृताः ॥एवञ्च दिव्याः पितरः पूज्याः सर्वे प्रयत्नतः । कव्यवालोऽनलः सोमो यमश्चैव तथार्यमा ॥अग्निष्वात्ताः सोमपाश्च तथा बर्हिषदोऽपि च । एते चान्येच पितरः पूज्याः सर्वे प्रयत्नतः ॥एतैस्तु तर्पितैः सर्वैः पुरुषास्तर्पिता नृभिः । यमश्च धर्मराजश्च मृत्युश्चैव तथान्तकः॥वैवस्वतश्च कालश्च सर्वभूतक्षय स्तथा । औदुम्बरश्च नीलश्च व्रध्नश्च परमेष्ठिना ॥चित्रश्च चित्रगुप्तश्च वृकोदर स्तथार्यमा । एतैस्तु तर्पितैःसद्भिर्विवस्वांस्तर्पितो नृभिः ॥तस्मात्प्राक् तर्पयित्वैतान् त्रिंशतीन्तर्पयेत्ततः । मातामहान्मातुलांश्च सखिसम्बन्ध बान्धवान् ॥स्वजनज्ञातिवर्गीया नुपाध्यायान् गुरूनपि । मित्रान् भृत्यानपत्यांश्च ये भवन्ति तदा स्मृतौ ॥तान् सर्वांस्तर्पयेद्विद्वान् ईहन्ते ते यतो जलम् । जलस्थश्च जले सिञ्चेत् स्थलस्थश्च तथा स्थलम् ॥ पादौ स्थाप्या भयश्चैव भवेत्प्रयतः शुचिः । गोशृङ्गमात्र मुत्क्षिप्य करौ विप्रो जले स्थितः ।अम्बरे तु क्षिपेद्वारि आकाशे दक्षिणामुखः ॥ पितॄणां स्थानमाकाशं दक्षिणादिक्तथैव च । स्थलगो नार्द्रवासास्तु कुर्य्याद्वै तर्पणादिकम् ॥ प्रेताद्दते नार्द्रवासा नैकवासाः समाचरेत् । एवं हि तर्पणं कृत्वा सर्वेषां विधिवद्द्विजः ॥निष्पीडयेत् स्नानवस्त्रं येन स्नातो भवेद्द्विजः ।निष्पीडयति यः पूर्वं स्नानवस्त्रं मजानतः ॥निराशाः पितरस्तस्य यान्ति देवाः सहर्षिभिः । निष्पीडयेत् स्नानवस्त्रं तिलदर्भैः समन्वितम् ॥न पूर्वं तर्पणाद्वस्त्रं नैवाम्भसि न पादयोः । एषु चेत्पीडयेद्वस्त्रं राक्षसं तदतिक्रमात् ॥ वस्त्रनिष्पीडने मन्त्र मिमं श्लोक मुदाहरेत् । तिलदर्भसमायुक्तं कुमृत्युर्नष्टदेहिनाम् ॥ ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः । तेषां तु दत्तमक्षय्य मिदमस्तु ति

लोदकम्॥ पितृवंशे मृता येच मातृवंशे तथैवच। एवं तृप्तिर्भवेत्तेषां तिलैस्तु सह वारिभिः॥ यदप्सु मलनिक्षेपः शौचस्नानादि कुर्वताम्। तस्य पापव्यपोहार्थमिमं मन्त्र मुदीरयेत्॥ यन्मया दूषितं तोयं मलैः शारीरसम्भवैः। तस्य पापस्य निष्कृत्यै यक्ष्मण स्तव तृप्यताम्॥ अम्बपेभ्योऽथ यक्ष्मभ्यो ददामीदं जलाञ्जलिम्। अन्यथा घ्नन्ति ते सर्वे सुकृतं पूर्वसाञ्चितम्॥ अपुत्रा ये मृताः केचित्पुमांसो योषितोऽपि वा। अस्मिन्वंशे पितेभ्यो वै दत्तं वस्त्रजलं मया॥ नास्तिक्येनापि यो विप्र स्तर्पयेत्पितृदेवताः। स तत्तृप्तिकरो धर्मान् प्राप्नुयात्परमाङ्गतिम्॥ नास्तिक्याद् वस्तुतो यस्तु तर्पयेन्न पितॄन् द्विजः। पिबन्ति देहिनं स्नावं पितरस्तज्जलार्थिनः॥ पितॄणां पितृतीर्थेन देवानां देवकेन तु। इति मत्वातु कुर्वाणा मुच्यन्ते गृहमेधिनः॥ पञ्चतीर्थानि विप्रस्य करे सप्ताथ दक्षिणे। ब्राह्मं दैवं तथा पित्र्यं प्राजापत्यन्तु सौमिकम्॥ ब्राह्म्यं पश्चिमलेखायां दैवं ह्यङ्गुलमूर्धनि। प्राजापत्यं कनिष्ठादौ मध्ये सौम्यं विजानतः॥ अङ्गुष्ठस्य प्रदेशिन्या मध्ये पित्र्यं प्रतिष्ठितम्। कुर्य्याद्दहरहश्चैवं सम्यक् ज्ञात्वा विधानतः॥ स प्राप्नुयाद्गृहस्थोऽपि ब्रह्मणः पदमव्ययम्। स्नात्वा हुत्वाच जप्त्वा च दत्त्वाचैव तु योऽश्नुते॥ अमृतं सोऽश्नुते नित्यं तस्य स्थान मनामयम्। अस्नात्वाश्नुमलं भुङ्क्ते अजप्त्वा पूयशोणितम्॥ अजुह्वंश्च कृमीन् कीटान् अददंश्च शकृत्तथा। आह्लादकरणं स्नानं दुःखशोकापहन्तथा॥ दुःस्वप्ननाशनञ्चैव कार्य्यं स्नानमतः सदा। चित्तप्रसाद बलरूप तपांसि मेधा मायुष्यशौचसुभगत्वमरोगिताञ्च। ओजस्विताम्त्विष मदात्पुरुषस्य चीर्णम् स्नानं यशोविभवसौख्यमलोलुपत्वम्॥ गीर्वाणवृन्दद्विजसत्तमस्तुनः प्राप्तो मयायुश्च वशिष्ठपो-

व्रतः। पापप्रनाशं विननोति यः श्रुतः प्रचोदितः स्नानविधिः सले
शः॥ उद्देशतो मया प्रोक्तः स्नानस्य परमो विधिः। द्विजन्मनां हि
तार्थन्तु जपस्यातः परं विधिः॥ ॥इति श्रीबृहत्पाराशरीये
धर्मशास्त्रे सुव्रतप्रोक्तायां संहितायां षट्कर्मस्नानविधिर्नाम तृ
तीयोऽध्यायः॥

जपस्यातः प्रवक्ष्यामि विधिं पराशरोदितम्। यावद्विधं जपं
यद्यद्यथाकार्य्यं द्विजातिभिः॥ जप्यानि ब्रह्मसूक्तानि शिवसू-
क्तानि चैव हि। वैष्णवानि च सूक्तानि तथा पौराण्यनेकधा॥ सा
रस्वतानि दौर्गाणि वारुण्यान्यनलानि च। पौराणिकानि चान्या
नि तथा सिद्धान्तिकानि च॥ सर्वेषां जपसूक्तानामृचां च यजुषां
तथा। साम्नां चैकाक्षरादीनां गायत्री परमो जपः॥ तस्याश्चैव-
तु ॐकारो ब्राह्मणाय उपासितः। आभ्यान्तु परमं जप्यं त्रैलो-
क्येऽपि न विद्यते॥ तयोश्च देवतार्षादि समासान्तोऽभिधीयते
येन विज्ञानमात्रेण द्विजो ब्रह्मत्व मश्नुते॥ आसीन्नच यदा कि
ञ्चित्सदेवासुरमानुषैः। तदेवाक्षरमेवासीदात्मविन्यस्तविश्व-
कः॥ गतभीरद्वितीयोऽपि एकाकी दिवि मोदते। चिन्तयामास -
गायत्रीं प्रत्यक्षा साऽभवत्तदा॥ गायत्री सा भवत्पत्नी प्रणवोऽभू
त्पतिस्तथा। पुनरन्यौ च दम्पत्याविति ताभ्या मभूज्जगत्॥ प्रण
वो हि परं तत्वं त्रिदेवं त्रिगुणात्मकम्। त्रिदेवत्वं त्रिधामञ्च त्रिप्र
ज्ञं त्रिरवस्थितम्॥ त्रिमानञ्च त्रिकालञ्च त्रिलिङ्गं कवयो विदुः।
सर्वमेतत्त्रिरूपेण व्याप्तन्तु प्रणवेन तु॥ ऋग्यजुः सामवेदश्च त्रि-
वेद इति कीर्तितः। सत्वं रज स्तमश्चैव त्रिगुणस्तेन चोच्यते॥ ब्र-
ह्मा विष्णुस्तथेशान स्त्रिदैवत मितीष्यते। अग्निः सोमश्च सूर्य्य
श्च त्रिधामेति प्रकीर्तिताः॥ अन्तःप्रज्ञं बहिःप्रज्ञं घनप्रज्ञ मुदा
हृतम्। हृत्कण्ठे तालुके चेति त्रिस्थान मिति कीर्त्यते॥ अकारोका

रमश्चेति त्रिमात्रा उच्यते सुत।। भूतम्भव्यं भविष्यञ्च त्रिकाल मिति स स्मृतः॥ स्त्रीपुंनपुंसकञ्चेति त्रिलिङ्गेति प्रकीर्तितः। त्रिस्वभावस्थितो वेदो मन्तव्यो ब्रह्मवादिभिः॥ पर्यवस्यति यत्रैत द्विश्व मुत्पद्यते यतः। निर्मात्रिकः समात्रोऽपि सादिरपि निरादिकः॥ स जप्यः सर्वदा सद्भिः ध्यातव्यश्च विधानतः। वेदेषु चैव शास्त्रेषु बहुधा स प्रकीर्तितः॥ तथा सत्यपि चैकोऽयं षट्कारादि स्तदा स्थितः। कर्मारम्भेषु सर्वेषु त्रिमात्रं सम्प्रकीर्तितः॥ स्थितो यत्र तथोङ्कारः स्मर्तव्यः स तथैव हि। ऋग्वेदः स्वरितोदात्त उदात्तस्तु यजुः श्रुतौ॥ सामवेदः स विज्ञेयो दीर्घः सप्लुत एव च। सनत्कुमारसिद्धान्ते प्रणवो विष्णुरुच्यते॥ यस्मिंस्तस्य च विश्रान्ति स्तत्परं ब्रह्मसञ्ज्ञितम्। उच्चारितस्य तस्याथ विश्रान्तञ्च यदक्षरम्। तदक्षरं समाध्याये यस्तत्रैव स लीयते॥ घण्टा स्त नितवत्तस्य विश्रान्तिः शब्दवेधसः। कुर्वीत ब्रह्मविद्विप्रो यदीच्छेद्योग मात्मनः॥ सर्वस्यापि च शब्दस्य ह्यन्त मुच्चारितस्य च। स ध्यायेद्यस्तु स ज्ञानी शब्दब्रह्मविदुच्यते॥ याज्ञवल्क्यो मुनीनाञ्च प्रागब्रवीज्जनकस्य च। वशिष्ठजोऽपि तं ब्रूयात् स्वभवे शब्दवेधसः॥ तैलधारा मिवाच्छिन्नदीर्घघण्टानिनादवत्। अवाग्रं प्रणवस्याग्रं यस्तं वेद स वेदवित्॥ स्थित्वा सर्वेषु शब्देषु सर्वं व्याप्त मनेन हि। न तेन हि विना किञ्चिद्वक्तुं यान्ति गिरा यतः॥ उद्गीत मक्षरं ह्येतदुद्गीतञ्च उपासते। उपास्यो मध्यतस्त्वेष दानं विश्रामयेद्धृदि॥ प्रणवाद्याः स्मृता वेदाः प्रणवे तर्पणे स्थिताः। वाङ्मयं प्रणवं सर्वं तस्मात्प्रणव मभ्यसेत्॥ ब्रह्मार्षं तत्र विज्ञेयमग्निश्च दैवतं महत्। आद्यच्छन्दः स्मरेत्तत्र नियोगोद्यानि कर्मणि॥ उत्पन्नमेतत् यजतः समस्तं व्यावृत्य तिष्ठेत्प्रलयेऽपि यत्र। एकाक्षरेणापि जगन्ति येन व्याप्ता

निकोऽन्यः परमोऽस्ति तस्मात् ॥ ध्येयं न जप्यं न च पूजनीयं त
स्मान्न देवान्द्वरणीय मन्यत्। दुस्तार संसारपयोधिमग्नताराय
विष्णुप्रणवः स पूज्यः ॥ उक्तमुद्देशतो ह्येतत् नृप मेकाक्षरस्य च
जप्याच सततं देवी गायत्री साधुनोच्यते ॥ ॥ इति श्रीबृह-
त्पाराशरीये षट्कर्माणि स्वरूपवर्णनं नाम चतुर्थोऽध्यायः ॥

गायत्र्याः संप्रवक्ष्यामि देवार्षादिक्रमेण तु। अक्षराणाञ्च
विन्यासं तेषाञ्चैव तु देवताः ॥ जपे यथाविधा कार्य्या यथाविधा
च सार्चयेत्। होमे यथा च कर्त्तव्या यथाथ वाभिचारके ॥ यत्फ-
लं जपहोमादौ यथावज्जप्यते च सा। ध्यातव्या च यथा देवी
यथावत्तन्निबोधत ॥ गायत्री तु परं तत्वं गायत्री परमागतिः। स
र्व्वाऽमरैरियं ध्याता सत्यं व्याप्तं तया जगत् ॥ उत्पाद्यते त्रिपा
दाया स्तस्यां पुनर्निवेशितम्। गायत्री प्रकृतिर्ज्ञेया ॐङ्कारः
पुरुषः स्मृतः ॥ ताभ्यां उभयसंयोगाज्जगत्सर्व्वं प्रवर्त्तते। पादा
स्त्रय स्त्रयो वेदा स्तेषु तत्वाक्षराणि च ॥ चतुर्विंशतिरेव स्यात्तै
र्व्याप्तमखिलं जगत्। आदायचैकं प्रथमन्तु पाद मृग्भ्यो द्वि
तीयन्तु तथा यजुर्भ्यः। साम तृतीयन्तु ततो भवेत्सा सावित्र्यदे
वी स्वयमेव सर्गे ॥ दैवत्यमस्या सविता सुरार्च्य श्छन्दोऽपि
गायत्रमभूच्च तस्याम्। विश्वस्य मित्रो द्विजराजपुत्रो मुनिर्नि
योगस्तु जपादिकेषु ॥ अस्यान्तु तत्वाक्षरविंशतिस्तु चत्वारि
पादत्रितयन्तु तस्याम्। भूरादिभिस्तिसृभिः संप्रयुक्ता सो-
ङ्कारमेतद्वदनं परस्याम् ॥ केचिद्द्भुताशं वदनवदन्ति सोवि-
र्भ्रदेव्याः श्रुतितत्वविज्ञाः। इमाञ्च वक्तुं सकलामराणामित्ये-
तया व्याप्तमशेषमेतत् ॥ भूम्यादिकेन त्रितयेन पादं पादञ्च
वेदत्रितयेन चास्याः। प्राणादिकेन त्रितयेन पादं पादौ त्रिभि
र्व्याप्तमशेषमस्याः ॥ यत्सूर्य्यमस्या द्विज वेत्ति पादं स वेत्ति

विद्वान् परमं पदन्तु। व्याप्तिः परस्याः सकलापि चैषा यो वेत्ति चैनां स तु वित्तमः स्यात्॥ गायत्रीं यो विजानाति ज्ञात्वा नैव उपासयेत्। नामधारकमात्रोऽसौ न विप्रो वृषलोऽहि सः॥ किं वेदैः पठितैः सर्वैः सेतिहासपुराणकैः। साङ्गैः सावित्रहीनेन न विप्रत्वमवाप्यते॥ गायत्रीमेव यो ज्ञात्वा सम्यगभ्यसते पुनः। इहामुत्र च पूज्योऽसौ ब्रह्मलोकमवाप्नुयात्॥ गायत्री चैव वेदाश्च ब्रह्मणा तोलिताः पुरा। वेदेभ्यश्च सहस्रेभ्यो गायत्र्यतिगरीयसी॥ तदक्षरेषु दैवत्यं चतुर्विंशति रुच्यते। सन्न्यासं यद्विबोधेन कुर्वन् ब्रह्मत्वमाप्नुयात्॥ जानीयादक्षरं देव्याः प्रथमामाशुशुक्षणे। प्राभञ्जनं द्वितीयन्तु तृतीयं शशिदैवतम्॥ विद्युतश्च तुरीयन्तु पञ्चमन्तु यमस्य तु। षष्ठन्तु वारुणं तत्वं सप्तमन्तु बृहस्पतेः॥ पार्ज्यन्यमष्टमं तत्वं नवमं चन्द्रदैवतम्। गान्धर्वं दशमं विद्यात्त्वष्टुरेकादशं तथा॥ मैत्रावरुणमन्यद्वै पूष्णस्तथा त्रयोदशम्। चतुर्दशं सुरेशस्य प्रागिदं ब्रह्मणा स्मृतम्॥ मरुदेवात्मकं ज्ञेयं पञ्चदशं यदक्षरम्। सौम्यञ्च षोडशं तत्त्व माङ्गिरसमथापरम्॥ विश्वेषाञ्चैव देवाना मष्टादशमथाक्षरम्। अश्विनौ चोनविंशन्तु विंशं प्राजापतेर्विदुः॥ एकविंशं कुबेरस्य द्वाविंशं शङ्करस्य च। त्रयोविंशं तथा ब्राह्मं चतुर्विंशन्तु वैष्णवम्॥ इति ज्ञात्वा द्विजः सम्यक् स सर्वाक्षर देवताः। कुर्वन् जपादिकं कर्म परं श्रेयोऽधिगच्छति॥ पादाङ्गुष्ठादिमूर्द्धान्त मात्मनो वपुषि न्यसेत्। अक्षराणि च सर्वाणि पृच्छन् ब्रह्मत्वमात्मनः॥ पादाङ्गुष्ठयुगे त्वेकं एकङ्गुल्फद्वयोर्द्वयोः। जानुनोश्च द्वयोरेकमेकन्तु रेकयोर्द्वयोः॥ गुह्येकट्यां तथैकैकं एकैकं जठरो रसैः। स्तनद्वये तथैकन्तु न्यसेदेकं गले तथा॥ वक्त्रे तालुनि दृक् श्रुत्योः च

तुर्ष्वेकैकमेवच। भ्रुवोर्मध्ये तथैकन्तु ललाटे चैकमेव हि॥ या म्यपश्चिमसौम्येषु एकैक मेकमूर्द्धनि। गायत्रीन्यस्तसर्वाङ्गो गायत्री विप्र उच्यते॥ लिप्यते नस पापेन पद्मपत्रमिवाम्भसि। यः प्रोक्तोक्षरविन्यासो व्याहृतीनामथोच्यते॥ सप्तापि व्याहृतीर्न्यस्त्वा भवेद्भर्गो जपादिषु। भूर्लोकं पादयोर्न्यस्त्वा भुवर्लोकन्तु जानुनोः॥ स्वर्लोकं कटिदेशे तु नाभिदेशे महस्तथा। जनलोकन्तु हृदये कण्ठदेशे तपस्तथा॥ भ्रुवोर्ललाटसन्ध्योश्च सत्यलोकः प्रतिष्ठितः। हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्॥ तच्छुभं ज्योतिषां ज्योति स्तद्यदात्मविदो विदुः। देवस्य सवितुर्भर्गो वरणीयञ्च धीमहि। तदस्माकन्धियो य स्तु ब्रह्मत्वे च प्रचोदयात्॥ छन्दो दैवतर्पणञ्च विनियोगञ्च ब्राह्मणम्। मन्त्रं पञ्चविधं ज्ञात्वा द्विजः कर्म समाचरेत्॥ स्वरतो वर्णतश्चैव परिपूर्णं भवेद्यथा॥ हीनं न विनियुञ्जीत मन्त्रन्तु मात्रयापि च। देवतायतने कुर्य्याज्जपं नद्यादिकेषु च॥ आगमेषु यतीनाञ्च गोष्ठे वा स्वगृहेऽपि वा। चतुर्षु मतिपूर्वेषु ह्येनमादि क्रमेण तु॥ दशगुणं सहस्रं स्यात् फलं निष्काममन्तकम्। असमीपे जलं कुर्य्यात् ससङ्ख्यं तद्भवेद्यथा॥ असङ्ख्य मासुरं यस्मात्तस्मात्तद्गणयेद् ध्रुवम्। स्फाटिके द्रौ रुद्राक्षैः पुत्रजीवसमुद्भवैः॥ अक्षमाला प्रकर्त्तव्या प्रशस्ता ह्युत्तरोत्तरा। अभावे त्वक्षमालायाः कुशग्रन्थ्याथ पाणिना॥ यथा कथञ्चिद्गणयेत्ससङ्ख्यं तद्भवेद्यथा। प्रणवो भूर्भुवः स्वश्च पुनः प्रणवसंयुतम्॥ अंत्योङ्कारसमायुक्तां मन्यन्ते कवयोऽपरे। प्रणवान्ते तथाचादौ आहुरन्ये जपे क्रमम्॥ आदौ चैवतु चोङ्कार आवृत्तादिक्रमोऽन्ततः। तदाद्यञ्च तदन्तञ्च कुर्य्यात्प्रणवसंपुटम्॥ आद्यन्तरक्षितं कुर्य्यात् इति पाराश-

रोऽब्रवीत् ।अक्षर प्रतिलोमेन सोङ्कारेण क्रमेण तु। पुट्कारा-न्ताञ्च कुर्वीत प्रच्छन्नरिवधं बुधः॥ होमेऽपि च जपं कुर्य्यात् प्रणवावर्जनं द्विजः। अभिप्रेतार्थ होमादौ स्वाहान्तन्त मुदीरयेत्॥ सङ्कीर्णतां यदा पश्येद्रागाद्वा द्विषतोऽपि वा। तदा जपेच्च गायत्रीं सर्वदोषापनुत्तये॥ रुद्रजाप्यानि कार्य्याणि सूक्तञ्च पुरुषस्य च। शिवसङ्कल्पजल्पञ्च सर्वं कुर्य्याद्विधानतः॥ घ्नन्ति जप्तानि पापानि श्रेयोदद्युस्तदर्थिनः। अतो जपं सदा कुर्य्याद्यदिच्छेच्छुभमात्मनः॥ द्रुपदां वा जपेद्देवी मजपाञ्च म्बुकान्तथा। प्रणवञ्च सदाभ्यस्येद्याति ब्रह्मत्वमिच्छति॥ प्रणवानामयुक्ताभ्यां तथा षोडशाभिः शतैः। पुंसाङ्कच्छत्यहोरात्रं तत्सङ्ख्यामजपां विदुः॥ रविमण्डलमध्यस्थे पुरुषे लोकसाक्षिणि। समर्पितमयाचेदं सूर्यारव्ये ब्रह्मणः पदे॥ न जपं प्रसभं कुर्यात् प्रसभं घ्नन्ति राक्षसाः। ब्राह्मणा भागधेयस्तु तेषाञ्चैवावधीकृताः॥ उपांशुन्तु जपं कुर्यात् कार्य्यं चैव तु मानसम्। निवृत्तोष्ठमुपांशु स्यादचलोष्ठं तु मानसम्॥ द्विविधन्तु जपं कुर्यादुपांशुं मानसन्तथा। उपांशुः स्याच्छतगुणः सहस्रो मानसः स्मृतः॥ उपांशुजपयज्ञस्य मानसे च रतस्य च। इहैव याति वेधस्त्वमिति पाराशरोऽब्रवीत्॥ विधियज्ञाः पाकयज्ञाये चान्ये बहवो मखाः। सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम्॥ जपेनैकेन सिद्धेन किल सिद्ध भवेदिह। कुर्य्यादन्यं न वा कुर्यान्मैत्रो ब्राह्मण उच्यते॥ शतेन जन्मजनितं सहस्रेण पुराकृतम्। अयुतेन त्रिजन्मोत्थं गायत्री हन्ति पातकम्॥ दशभिर्जन्मजनितं शतेन तु पुराकृतम्॥ सहस्रेण त्रिजन्मोत्थं गायत्री हन्ति पातकम्। अस्मिन् कलियुगे विद्वान्विधिवत् कर्म यत् कृतम्॥ भवेद्दशगुणं तद्धि कृतादौ युगतो ध्रुवम्। न च

तच्छक्यते कर्तुं मात्राम्नायस्य भूषणात् ॥ अयथार्थकृतात्पा-
ठान्मन्त्रसिद्धिर्गरीयसी। नच मन्त्रोपहसनं स्वपार्श्वमवलोक
येत् ॥ नान्यसक्तो न तप्तस्थो न चैवार्द्रशिरास्तथा। नाङ्घ्रीणां
पादमाक्रम्य न चैवहि तथाकरौ ॥ नैवम्विधं जपङ्कुर्य्यान्नैव
सञ्चालयेत्करौ। प्रच्छन्नानि च दानानि ज्ञानञ्चानिरहङ्कृत
म् ॥ जपानि च सुगुप्तानि तेषां फलमनन्तकम्। य एवमभ्यसे-
न्नित्यं ब्राह्मणः संयतेन्द्रियः ॥ स ब्रह्मलोकमाप्नोति तथा ध्या-
नार्चनादपि। अथान्यत्सम्प्रवक्ष्यामि विशेषन्तु पितामहे ॥ ल
ब्धवान्वेधसः पृष्टाद्गायत्रीध्यानमुत्तमम्। तदक्षरे तु यद्वर्णं
यत्र यत्र च यः स्मरेत् ॥ यत्फलं लभते कृत्वा यथा तस्याः स
मर्चनम्। तत्प्रकृतिं स च स्यान्तम्विकारो बुद्धिरेव च ॥ तुरीत्ये
तदहङ्कारं वशब्दं विद्धिपापहम्। रे स्पर्शन्तु णिरूपं च यं रस
ङ्गन्धमात्रभम् ॥ गोः श्रोत्रन्देत्वचञ्चक्षुः सकार रसना तथा। यो
नासाच तथा वाग्मी हि हस्तौ च द्विपाद्द्वयम् ॥ य उपस्थन्तु दं
योन्यो नरवं प्राकारमारुतम्। चौ तेजोदलजं यक्ष्मा गायत्र्यास्त
त्वचिन्तनम् ॥ चतुर्विंशतितत्वानाम्प्रत्येकमक्षरेषु यः। गाय-
त्रीं संस्मरेद्योगान् स याति ब्रह्मणः पदम् ॥ लकारं पादयोर्न्य
स्य ब्रह्मविष्णुशिवाकृतिम्। शान्तम्पद्मासनारूढन्ध्यानाद्दह
ति किल्बिषम् ॥ सकारं पादयोर्न्यस्त्वा अतसीपुष्पसन्निभ
म्। पद्ममध्यास्थितं सौम्यन्तद्धते चोपपातकम् ॥ विकारं ज
ङ्घयोर्द्यासिन्ध्यायेदेतद्विचक्षणः। ब्रह्महत्याकृतं पापं ह
न्यात्तद्धि स्मृतः क्षणात् ॥ उकारं जानुदेशे तु इन्द्रनीलसमप्र
भम्। निर्दहेत् सर्व्वपापानि ग्रहरोगमुपद्रवम् ॥ ऊर्वोर्विविम
लन्ध्यायेत् शुद्धस्फटिकविद्युतिम्। विज्ञातं हन्ति तत्पापमग
म्यागमनं कृतम् ॥ रेकारं वृषणे प्रोक्तं विद्युत्स्फुरिततेजसम्।

ष्ठति। तद्वै निवर्तनं ज्ञेयं इति केचिद्वदन्ति हि ॥ ताम्रपट्टे पटे वापि ले
खयित्वा च शासनम्। ग्रामं विप्राय वा दद्याद्दशसीरक्षितिं पुनः॥
सीरस्यैकस्य वा दद्यात्तस्य पुण्यं किमुच्यते। भूम्यंशु कणिकातु
ल्याः समा विष्णुपुरे वसेत् ॥ भूमिदानात्परो धर्मो त्रैलोक्येऽपि
न विद्यते। पादैकमात्रदानेन तस्य विष्णुपुरे स्थितिः॥ तस्य दाना
त्परो धर्मस्तद्वृत्तेश्च त्रयन्तथा। तस्मात्तां यत्नतो दद्यान्हरणञ्च
विवर्जयेत् ॥ इहैव भूमिदानस्य प्रत्यक्षं चिह्नमीक्ष्यते। क्षितिदः
स्वर्गतो भ्रष्टः क्षितिनाथः पुनर्भवेत् ॥ भुनक्ति च पुनर्भोगो यथा दि
वि तथा भुवि। गजैरश्वैर्नरैर्युक्तो हेमरत्नविभूषितः॥ वरस्त्रीगण
संसेव्यः स्तूयमानः स्वबन्धुभिः। छत्रालङ्कारसंयुक्तो वस्त्रवाद्योत्स
वादिभिः॥ इत्यादि भूमिदानस्य चिह्नन्ते वत्स! कीर्तितम्। वित्ते
नापि हि यः क्रीत्वा भूमिं विप्राय यच्छति ॥ यावत्तिष्ठति सा भूमि
स्तावत् स्वर्गे महीयते। गृहभूमिञ्च यो दद्याद्द्याद्याश्च समात्रकाम्
॥ गृहस्योपस्करन्दद्याद्गृहदानफलं लभेत् । कियन्मात्रञ्च यो दद्या
द्भूमिं विप्राय मानवः॥ तस्यापि हि महापुण्यन्दद्यादङ्गुलमा-
त्रकम्। नैतस्मात्परमं दानं कियदस्ति धरातले ॥ पुण्यफलं प्रव-
क्ष्यामि विशेषेण तु तत् शृणु। हैमानि यत्र मानानि मणिभिर्भूषि
तानि च॥ प्राकारा तत्र सौवर्णाश्चतुर्द्वाराः सुतोरणाः। दिव्याश्चा
प्सरसो यत्र तासां सङ्ख्या ह्यनेकशः॥ सुपर्व्वाणी कसायुक्तौ ग्री
वाभरणभूषितौ। दृष्ट्वा याः कामदेवोऽपि नचेत्कामातुरः क्षणात्।
सुकेशाः सुललाटास्ता बालचन्द्रोपमभ्रुवः॥ सुनासाकर्णगण्डाश्च
शुभोष्ठाधरपल्लवाः। सुग्रीवा भुजपाल्यग्राः पीनोत्तुङ्गस्तनास्त-
था॥ सुमध्योरुनितम्बाश्च सुश्रोण्यश्च शुभोरुकाः। सुजानुजङ्
घागुल्फाश्च सुपादाः सुनखास्तथा॥ केन रूपेण ता वर्ण्या भ-
वन्त्यप्सरसा द्विजाः। वैष्णवाः गणिकाः सर्वाः दिव्यस्रग्वस्त्रभू

षभाः॥दिव्यानुलेपलिप्ताङ्गा दिव्यालङ्कारभूषिताः।मन्मथोऽपि हि तान् दृष्ट्वा भवेत्कामातुरः क्षणात्॥ वर्ण्यन्ते ताः कथं देव्यो या लक्ष्मी प्रतिमोपमाः।वैष्णवाप्सरसां सङ्घैर्वेष्टिताश्चामरादिभिः।गीयमानश्च गन्धर्वैः स्तूयमानश्च दैवतैः॥वसेद्विष्णुपुरे तावद्यावत् विष्णुरजः क्षितौ। पुण्यं वै भूमिदानस्य कथितन्तव वत्सक!॥मोक्तुर्धरित्री कुलपर्वताश्च पाथोऽर्णवः स्वर्गतलादिकादिः। देयानि सर्वाणि च सर्वकामैः प्रोक्तानि दानानि पुरावदद्भिः॥ आत्मतुल्यं सुवर्णं वा रजतं द्रव्यमेव च। यो ददाति द्विजाग्रेभ्योस्तस्याप्येतत् फलं भवेत्॥ ब्रह्महत्यादि पापैस्तु यदि मुक्तो भवेन्नरः। स तत्पापविनिर्मुक्त मोक्ते विष्णुपुरे व्रजेत्॥ तुलापुरुषभूम्यौ च दीयमानौ च ये नराः। पश्यन्ति तेऽपि यान्त्येव ये च स्युरनुमोदकाः॥ गुडं वा यदि वा खण्डं लवणञ्चापि तोलितम्। यो दद्यात्यात्मना तुल्यं नारी वा पुरुषोऽपि वा॥ पुमान् प्रद्युम्न वत्स! स्यान्नारी स्यात्पार्वतीसमा। सौभाग्यरूपसंयुक्तं भुञ्जीनान्ते त्रिविष्टपम्॥ हिरण्यदक्षिणायुक्तं सवस्त्रं भूषणान्वितम्। अलङ्कृत्य द्विजाग्र्यन्तं परिधाप्य च वाससी॥ खण्डादितोलितं पश्चाद्विप्राय प्रतिपादयेत्। सर्वकामसमृद्धात्माऽनन्तकालं वसेद्दिवि॥उष्ट्रं खराजं महिषञ्च मेषं अश्वान् करेणुं महिषीमजांश्च।मृदुःखरोष्ट्री मविकां मुनीन्द्रा! हेमादियुक्तं सकलञ्च दानम्॥ वराणि रत्नानि च हैमरूप्य शुभानि वासांसि च कांस्य ताम्रे। उपाधिमात्रं करभादि कृत्वा हेमादिदानं द्विज! दीयते हि॥ केचिद्वदन्ति चैतानि कृत्वा हेममयानि च। सर्वोपस्करयुक्तानि देयानि हेमधेनुवत्॥अर्चयित्वा हृषीकेशं पुण्येऽह्नि विधिपूर्वकम्। अग्निशुद्धं सुवर्णञ्च विप्रमाहूय यच्छति॥ स भुक्त्वा विष्णुलोकन्तु यदा गच्छति संभृतौ। तदासौ तेन पुण्येन धनयुक्तो द्विजो भवेत्॥ यो रौप्यमुत्तमं दद्यादर्थिने ब्राह्मणाय च। सोऽतीव धनसंयुक्तो रूपयुक्तश्च जायते॥ माणिक्यानि विचित्राणि

नानानामानि यो नरः। तथा ताम्रञ्च कांश्यञ्च त्रपुं वा सीसकादि वा॥ यो दद्याद्भक्तितो विप्रे ससोमलोकमवाप्नुयात्। सम्पूज्य सततं लोकं रूपवानिह जायते। घृतं ददाति यो विप्रे सोऽत्यन्तं सुखमश्नुते॥ भोजनाभ्यञ्जनार्थं वा भवेत्सोऽपि सुखी नरः। तैलप्रदानेन सततं भोजनाभ्यञ्जनाय च॥ स्निग्धदेहोऽपि तेजस्वी रूपयुक्तश्च जायते। मृदङ्गञ्च सकर्पूरं तुरुष्कं चन्दनादिकम्॥ गन्धद्रव्याणि दत्त्वा तु शुभगन्धः प्रजायते। ताम्बूलं पुष्पमालाञ्च पुष्पालङ्करणानि च॥ सुमतिर्वीर्य्यवांश्चैव धनयुक्तश्च जायते। शिशिरर्त्तौ च यो दद्यादनलं सेन्धनं नरः॥ स समिद्धोदराग्निः सन् प्रज्ञासूर्ययुतो भवेत्। यो दद्याद्ब्राह्मणेभ्यश्च नित्य मेधांसि मानवः॥ श्रियायुक्तो भवेदत्र संग्रामे चापराजितः। किञ्च वा बहुनोक्तेन दानस्य विस्तरेण च॥ यद्यदिष्टतमन्तस्य तत्तस्मै प्रतिपादयेत्। तिलान् दर्भांश्च नित्यार्थं तृणान्यास्तरणाय च॥ भुक्त्वा स तु सुखं स्वर्गे जातश्चात्र भवेद्भुवि। गुडमिक्षुरसङ्खण्डं दुग्धखर्ज्जूरसाधकान्॥ फलानि दत्त्वा सर्वाणि स्वादूनि मधुराणि च। सर्वाणि फलशाकानि लवणानि तथा द्विज!॥ स्थाप्यानि गृहपात्राणि शुभगोत्रो भवेन्नरः। कूष्माण्डन्त्रपुषं दत्त्वा वृन्ताकादिपटोलकान्॥ शुभानि कन्दमूलानि सुहृष्टः पुत्रवान् भवेत्। बदराम्रकपित्थानि खर्जूरदाडिमानि च॥ निम्बाश्चामलकं दत्त्वा पुत्रवानिह जायते। या नारी द्विज! चैतानि द्विजे भक्त्योपपादयेत्॥ सर्वं तस्य भवेत्तद्धि धेनुदानसमन्वितम्। भोजनाच्छादनं दत्त्वा दत्त्वा चोपानहौ द्विजः॥ स्वर्गलोकन्तु सम्भुज्य सर्वकामोऽत्र जायते। याः पुण्यनार्यश्च सकामि पुंसां कामोपभुक्त्यै निजदेहदाः स्युः। गीर्वाणचेतोहररूपवन्त्यः पौरन्दरास्ता गणिका भवन्ति॥ गृहं वा मणिकां वापि शयानासनविष्टपम्। दत्त्वा च कशिपुं विद्वान् विप्रान् यः पाठयेन्नरः॥ धरादानादिकं व्यास विद्यादानं शताधिकम्। विद्यार्थिनाञ्च

विप्राणां पादाभ्यङ्गमुपानहौ॥ यो ददाति द्विजश्रेष्ठ! ब्रह्मलोकं स ग च्छति। आदावारभ्य वेदांस्तु शास्त्रं वाच्यतमं द्विजः॥अध्यापयेत् द्विजान् शिष्यान् विद्यादानं तदुच्यते। उपाध्यायं निवेश्याग्रे तस्य कृत्वा च वर्तनम्॥विद्यां भक्त्या प्रयच्छेद्यः परब्रह्मण्यसौ विशेत्। विद्यार्थिनेऽथ विप्राय यो दद्याद्भोजनं द्विजः॥पादाभ्यङ्गं तथा स्ना नं सोऽपि दानांशभाग् भवेत्। यः स्वयं पाठयेद्विप्रान् स्नात्वा भ- क्त्या च सद्विजः॥साक्षात्स ब्रह्ममभ्येति नागपृष्ठञ्च संसृतौ। ऋचं वा यदि वार्द्धं च पादं पादार्द्धमेव च॥ अध्यापयति तस्यापि नास्ति शिष्यस्य निष्कृतिः। मन्त्ररूपं द्विजो दद्यादेकमपि शुभाक्षरम्। त स्य दानस्य वै शिष्यो न कर्तुं निष्कृतिं क्षमः॥ यद्विप्र! शिष्यप्रति पादितेन विद्याप्रदानेन न तुल्यमस्ति। नूनं धरित्र्यामविनाशि कि ञ्चित् तस्मात्प्रदेयन्तु तदेव विद्वन्!॥ रोगार्त्तस्यौषधं पथ्यं यो ददा ति नरस्य तु। अन्यस्यापि च कस्यापि प्राणदः स तु मानवः॥किन्नरै र्भूषणैर्दत्तैर्गोभिर्वासोभिरेव च। आदत्ते प्राणहीनेन प्राणदानमतः परम्॥अन्नं प्राणो जलं प्राणः प्राणश्चौषधमुच्यते। तस्मादौषध दानेन दाता सुरसमो द्विज!॥ प्राणदानं हि यो दद्यात्सर्वेषामपि दे हिनाम्। स याति परमं स्थानं यत्र देवस्त्रिनेत्रभुजः॥ यो दद्यान्मधुरां वा च माश्वासनकरामृतम्। रोगक्षुधादिनार्त्तस्य स गोमेधफलं लभेत्॥ क्लीबान्धबधिरादीनां रोगार्त्तानां शरीरिणाम्। यत्किञ्चिद्दीयते तेषां दयादानं तदुच्यते॥ ये यच्छन्ति दयादानं कृत्वा दीनदयां नराः। तेऽपि तद्दानधर्मेण विष्णुलोकमवाप्नुयात्॥ अथान्यत्सम्प्रवक्ष्यामि ति- थिमासगतं द्विज!। यत्प्रदाने मुनिश्रेष्ठ! विशिष्टं फलमिष्यते॥ मा- से मार्गशिरे दानं पूर्णचन्द्रतिथौ नरः। विधीनथ प्रवक्ष्यामि यत्प्रदा नं महत् फलम्॥ कांस्यपात्रमक्लिष्टन्तु लवणं प्रस्थपूरितम्। हिर- ण्यनाभं वस्त्रेण कुसुम्भेन च छादितम्॥ स्नाताचान्ताय विप्राय स

वस्त्रं प्रतिपाद्य च। सौभाग्यरूपलावण्ययुक्तो भवति मानवः॥ गौर सर्षपयुक्तेन पौष्यानुत्सादितो नरः। स पुनरभिषेक्तव्यः कुम्भेन हव्यसर्पिषा॥ सर्वगन्धोदकैस्तीर्थैः फलरत्नसमन्वितैः। सुवर्णप्रमुखं दृष्ट्वा प्रदद्यात्तु द्विजातये॥ घृतेन स्नापयेद्विष्णुं भक्त्या संपूजयेद्धरिम्। घृतञ्च जुहुयाद्वह्नौ घृतं दद्याद् द्विजातये॥ छत्रं वस्त्रयुतं दद्यात्सोपवासः समाहितः। कर्मणा तेन धर्मज्ञः पुष्टिमाप्नोत्यनुत्तमाम्॥ माघ्यां कुर्व्वंस्तिलैः श्राद्धं मुच्यते सर्वकिल्बिषैः। शुभं शयनमास्तीर्य फाल्गुन्यां स द्विजातये॥ रूपद्रविणसंयुक्तो भार्य्यां रूपवतीं लभेत्। नरः प्राप्नोति धर्मज्ञः श्रियं प्राप्नोत्यनुत्तमाम्॥ नार्यपि शुभभर्त्तारं रूपसौभाग्यसंयुतम्। प्राप्नोति विपुलान् भोगान्नात्र कार्य्या विचारणा॥ पौर्णमासीषु चैतासु मासर्क्षसंयुतासु च। एतेषामेव दानानां फलं दशगुणं भवेत्॥ महापौर्णासु चैतासु फलमक्षय मश्नुते। द्वादश्यां चैव शुक्लस्य चैत्रे वस्त्रप्रदो नरः॥ अक्षयं फलमाप्नोति नागलोक मनुत्तमम्। इत्यन्तं कथितं विप्र! फलं चैत्रस्य सत्तम!॥ दद्याद्धेमच वैशाखे द्वादश्यां यो नरः सितम्। शुक्ले च्छत्रोपानहौ च विष्णुलोक मवाप्नुयात्॥ आस्तीर्य शयनं दत्वा प्रणम्य भोगशायिनम्। आषाढशुक्लद्वादश्यां चैत द्वीप मवाप्नुयात्॥ श्रावणे वस्त्रदानेन विष्णुसायुज्य मृच्छति। गोदः प्रयाति गोलोकं मासे भाद्रपदे द्विजः॥ प्रीणयेदश्वशिरसम् अश्वं दत्वा तथाश्विने। विष्णुलोक मवाप्नोति कुल मुद्धरते स्वकम्॥ स नरो वस्त्रदानेन कार्त्तिक्यां दिवमाप्नुयात्। प्रदानं लवणानां तु मार्गशीर्षे महाफलम्॥ धान्यानाञ्च तथा पौषे दारूणा मप्यनन्तरे। फाल्गुने सर्वगन्धानां भवेद्दानं महाफलम्॥ गजर्क्षसंयुता चैत्रे द्वादश्यां तु महाफलम्। मासे तु माधवे शुक्लद्वादश्या चारसंयुता॥ वायव्येन युता शुक्रे शुचौ मूलेन वैष्णवी। नभस्याश्विनयोः पुण्या श्रावण्यजर्क्षसंयुता॥ पौष्णार्क्षे संयुता चैत्रं हेमार्गे कृ

त्तिका युता। महस्ये रिक्थकोपेता तपसि चादित्यसंयुता॥ गुर्वर्क्षयुक्तपुष्ये च द्वादशी पावना स्मृता। नक्षत्रयुक्तास्वेतासु दत्त्वा दानाद्यनन्तकम्॥ मेषं च मेषसंक्रान्तौ गोवृषं वृषसंक्रमे। शयनासनदानञ्च मिथुनोपगमे तथा॥ कर्कप्रवेशे सक्तून् हि प्रदद्याच्छर्करां तथा सिंहप्रवेशे पात्राणां तैजसानां तथैव च॥ तुलाप्रवेशे धान्यानां बीजाना मतिचोत्तमम्। कीटप्रवेशे वस्त्राणां वेश्मनां दानमेव च॥ धेनुःप्रवेशे वस्त्राणां यानानाञ्च महाफलम्। झषप्रवेशे सर्वेषां अन्नानां दानमुत्तमम्॥ स्नेहानाञ्चैव दारूणां दानमग्ने स्तथैव च। कुम्भप्रवेशे दानन्तु गवामर्थे तृणस्य तु। मीनप्रवेशे स्नानानां माल्याना मपि चोत्तमम्॥ दानान्यथैतानि मया द्विजेन्द्र! प्रोक्तानि काले तु नरः प्रदाय। प्राप्नोति कामान् मनसात्यभीष्टां स्तस्मात्प्रशंसन्ति हि कालदानम्॥ अशौचे सूतके वापि न दानव्यः प्रतिग्रहः। सतोरपि तयो र्देया परन्त्वभयदक्षिणा॥ रात्रौ दानं न दातव्यं दातव्य मभयं द्विज!। त्रयाणामपि देयानि विद्याकन्या प्रतिग्रहाः॥ पान्थानामतिथीनाञ्च गवामपि च पूजनम्। रात्रावपि च कर्त्तव्य मिति पाराशरोऽब्रवीत्॥ शुचिः सन्नशुचिर्वापि दद्यात् गृह्णीत चोभयम्। अक्षयं दानकालोऽयं यदाभय मुपस्थितम्॥ अन्यप्रतिग्रहो विद्वान् ग्राह्यश्च शुचिना सह। अशौचसूतके चैव न तु ग्राह्या भवन्ति ते॥ अव्यक्तेनच धर्मज्ञ! तथा मुक्तशिखेन च। स्नात्वाचम्य पयः स्पृश्य गृह्णीत प्रयतः शुचिः॥ द्रव्यस्य नाम गृह्णीयाद्दाता तथा निवेदयेत्। तोयं दत्त्वा तथा दाता दाने विधिरयं स्मृतः॥ प्रतिगृह्णीत सावित्र्या सर्वमत्र ह्युदीरयेत्। सार्धद्रव्येण तत् सर्वं तद्द्रव्यञ्च सदैवतम्॥ समापय्य ततः पश्चात्कामं स्नात्वा प्रतिग्रहम्॥ प्रतिग्रही पठेदुच्चैः प्रतिगृह्य द्विजोत्तमात्। मन्दं पठेत राजान्यादुपांशु च तथा विशः॥ मनसा च तथा शूद्रात् कर्त्तव्यं स्वस्तिवाचनम्। सोङ्कारं ब्राह्मणो ब्रू

यात् निरोद्धारं महीपतिः॥उपांशु च तथा वैश्ये स्वस्ति शूद्रे तथैव च। न दानं यशसे दद्यात् नभयान्नोपकारिणे॥ न नृत्यगीतशीले-भ्यो हासिकेभ्यश्च धार्मिकः। पात्रभूतोहि यो विप्रः प्रतिगृह्य प्रतिग्रहम्॥ असत्सु विनियुञ्जीत तस्मै देयं न तद्भवेत्। सञ्चयं कुरुते यस्तु समादाय इतस्ततः॥ धर्मार्थं नोपयुञ्जीत न तं तस्कर मर्चयेत्। यस्मै दद्याद्द्विजा! यस्य नत्वा तमुररी नरः॥ दानञ्च हृदि संविन्त्य जलमध्ये जलं क्षिपेत्। वदन्ति मुनयो गाथां परोक्षे दानसत्फलम्॥परोक्षे चैव यद्दानं प्रत्यक्षात्कोटिशो भवेत्। पात्रं मनसि सञ्चिन्त्य गुणवन्त मभीप्सितम्॥ अप्सु ब्राह्मणहस्ते वा भूमावपि जलं क्षिपेत्। दानकाले तु संप्राप्ते पात्रेचासन्निधौ जलम्॥ अन्याविप्रकरे दद्याद्दानं पात्राय दीयते। विष्णुस्ते तारणायास्तु गृह्णन्ति हि करोदकम्॥ तद्दानं ब्रह्म संप्राप्त मक्षय्य मिति विष्णुगाः। लक्ष्मीपृष्टा च यद्दत्तं दरिद्रायार्थिने द्विज!॥ तदक्षय्यं समुद्दिष्ट मिति पाराशरोऽब्रवीत्। राज्यभ्रष्टञ्च राजानं यस्तं राज्ये निवेशयेत्। विष्णुलोकसमं भुज्य भवेत्पतिर्दिवौकसाम्॥ प्रतिगृह्य द्विजार्थं यो न यच्छति च तं पुनः। न च स्मारयते विप्र स्तुल्यन्तदुपपातकम्॥ प्रतिश्रुत्य तु यत्किञ्चिद्द्विजेभ्यो न ददाति यः। स वै द्वादश जन्मानि शृगालीं योनिमाप्नुयात्॥ घृष्ट्यादीनि प्रवक्ष्यामि यथा लक्षणदीक्षितान्। मानभूमिन्तिलादीनां यथावत्तां निबोधत॥ अजातदन्ता या तु स्याद्दुर्भदन्त समन्विता। वर्षादर्वाक् चतुर्थाचे या वदेतत् प्रकीर्तिता। सुशीला च सुवर्णा च अरोगा च यशस्विनी॥ सुवत्सा प्रथमं सूता घृष्टिर्गौरभिधीयते। अरोगा या परिक्लिष्टा प्रसवत्य प्रसूतिका॥सूता सातिपयोयुक्ता सा गोसामान्यतः स्मृता। पूर्वोक्तगुणसंयुक्ता प्रत्यङ्ग प्रसवा तथा॥ साथ गौर्धेनुरित्युक्ता वशिष्टस्यवचो यथा॥ पञ्चगुञ्जो भवेन्माषः कर्षः षोडशभिश्चतैः

तैश्चतुर्भिः पलं प्रोक्तं दाने मानं च पुण्यदम्॥ भद्रनारैकहस्ताभिः प्रसृतीभिश्च तास्त्रिभिः। माणकन्तैश्चतुर्भिश्च सेतिकेति प्रकीर्तिताः॥ ताभिश्चतसृभिः प्रस्थश्चतुर्भिरारकैश्च तैः। द्रोणश्चतुर्भिस्तै रुक्तो धान्यमानं प्रकीर्तितम्॥ तैलप्रसृतिभिर्भाण्डं चतसृभिर्यत्प्रपूर्यते। तैश्चतुर्भिश्च कूर्चश्च तैश्चतुर्भिश्च वैफलम्॥ पातैश्चतुर्भिः स्यात्तच्ची पारी तच्च चतुष्टयम्। करकं चतसृभिस्ताभिश्चतुर्भिस्तैर्घटः स्मृतः॥ इत्येतैः कार्षाभिः प्रोक्तं घृतगोतिलगोसमाः। किञ्चिच्च बहुनोक्तेन दानस्य तु पुनः पुनः॥ दीयते यद्दरिद्राय कुटुम्बिने तदक्षयम्। सुकुटुधाय विप्राय भक्त्या परमया वसु॥ दीयन्ते वेदविदुषे तदुपतिष्ठन्ति यौवने। अथान्यत्सम्प्रवक्ष्यामि दानानि निष्फलानि तु॥ तथा निष्फलजन्मानि तथा तच निबोधत। वृथा जन्मानि चत्वारि वृथा दानानि षोडश॥ तानि पृथक् प्रवक्ष्यामि निबोध त्वं द्विजोत्तम॥ अपुत्रस्य वृथा जन्म ये च धर्मबहिष्कृताः॥ दरिद्रस्य वृथा जन्म व्याधितस्य तथैव च। अपुण्यस्थाने यद्दत्तं वृथादानं प्रकीर्तितम्॥ आरूढपतिते दानं अन्यायोपार्जितञ्च यत्। व्यर्थ मब्राह्मणे दानं पतिते तस्करेऽपि च॥ गुरोरप्रीतिजनके कृतघ्ने ग्रामयाचके। ब्रह्मबन्धौ च यद्दानं यद्दत्तं वृषलीपतौ॥ वेदविक्रयिणे चैव यस्य चोपपतिर्गृहे। स्त्रीजिते चैव यद्दत्तं व्यालग्राहे तथैव च॥ परिचारके तु यद्दत्तं वृथा दानानि षोडश। न मोरतश्च यो दद्याद्ब्रूयात् क्रोधात्तथैव च॥ विद्वद्दत्तं हि तत्सर्वं भुङ्क्ते गर्भस्थ एव हि। ईर्ष्यया मन्युना दानं यद्दान मर्थकारणात्॥ यो ददाति द्विजातिभ्यो बालाभावे तदश्नुते। स्वयं नीत्वा च यद्दानं भक्त्या पात्रे प्रदीयते॥ अप्रमेयगुणं तद्धि उपतिष्ठति यौवने। यत्सद्विप्राय वृद्धाय भक्त्या परमया वसु॥ दीयते वेदविदुषे तदुपतिष्ठति वार्द्धके। तस्मात्सर्वास्ववस्थासु सर्वदानानि सत्तम॥ दात

ज्यानि द्विजातिभ्यः स्वर्गमार्ग मभीप्सता। भूमेः प्रतिग्रहं कुर्याद्भूमिं कृत्वा प्रदक्षिणम्॥ करे गृह्य तथा कन्यां दासदासौ तथा द्विजः। करन्तु हृदि विन्यस्य धर्मो ज्ञेयः प्रतिग्रहः। आरुह्य च गजस्योक्तकर्णस्याश्वः प्रकीर्तितः॥ तथा चैकशफानाञ्च सर्वेषा मविशेषतः। प्रतिगृह्णीत गांशृङ्गे पृष्ठकृष्णाजिनं तथा॥ कर्णजाः पशवः सर्वे ग्राह्याः पुच्छे विचक्षणैः। प्रतिग्रहं तथोष्ट्रस्य आरुह्यैव तु पादुके॥ ईशायान्तु रथो-ग्राह्यः क्षत्रं दण्डे तु धारयेत्। द्रुमाणा मथ सर्वेषां मूले न्यस्तकरो भवेत्॥ आयुधानि समादाय तथामुच्य विभूषणम्। धर्मध्वज स्तथा स्पृष्ट्वा प्रविश्य च तथागृहम्॥ अवतीर्य तु सर्वाणि जलस्थानानि यानि तु। उपविश्य च शय्यायां स्पर्शयित्वा करेण वा॥ द्रव्याण्यन्यान्यथादाय स्पृष्ट्वा वा ब्राह्मणः पठेत्। कन्यादाने तु च पठेद् द्रव्याणि तु पृथक् पृथक्॥ प्रतिग्रहं द्विजश्रेष्ठ! तथैवान्त भवन्ति ते। द्रव्याणामथ सर्वेषां द्रव्यसंश्रयणान्नरः॥ वाचयेज्जलमादाय हुङ्कारेण प्रतिग्रहम्। प्रतिग्रहस्य यो धर्मं यो जानाति द्विजो विधिम्॥ सद्रव्यस्तेन्यसंयुक्तो नरकं प्रतिपद्यते। अथापि वक्ष्यामि विधिं विशेषं वाजिदानतः॥ दातृग्रहीत्रोरपि येन पुण्यं स्वर्गाय जायेत शृणुध्वमेतत्। गृह्णीत योऽश्वं विधिवद्द्विजेन्द्रः कुर्य्यादसौ पञ्चदिनानि पूर्वम्॥ पञ्चोपचारै र्युत विष्णुपूजां कूष्माण्डमन्त्रैर्घृतदुग्धहेम। यद्राम इत्यादि गरुत्वतीयं सोङ्कारभूरादिभिरन्वितं च॥ प्रत्येकमष्टौ जुहुयाद्द्विजाग्र्याः! तदा तथामानसयो द्विजेन्द्राः!। सौर्येण मन्त्रेण च तद्वदष्टौ षष्ठ्यां प्रयुक्तं त्रिशतं जुहोति॥ कुर्य्याच्च गायत्र्यजपं सहस्रं पश्चात्प्रगृह्णं स्तुरगं द्विजेन्द्रः। दातापि चैतद्व्रतमाविदध्याद्द्विजाग्र्यवर्याक्तनयोर्विशुद्धे। द्वावप्यमू सूर्यजलं लभेते अत्रापि पूज्यौ द्विजवृन्दमध्ये॥ ॥अश्वप्रतिग्रहविधिः॥

॥पुराण गीता सु भवन्ति गाथा विशिष्ट पुण्यप्रतिपादनाय। तिथौ प्रदत्तं द्विज! यत्र पूर्व क्रमेण चैतं पुनरुच्यतां तु॥ श्रावणे शुक्लपक्षे तु द

दश्यां दीयते द्विज।। गोप्रदानेन गोविन्दो वदन्त्येतन्मनीषिणः।। पक्षे शुक्ले तथा वत्स। द्वादश्यां घृतधेनुकाम्। घृतार्चिः प्रणनायालं प्रदद्यात् फलदायिनीम्।। तथैव माघद्वादश्यां प्रदत्ता तिलगौर्द्विज।। केशवं प्रीणयन्त्याशु सर्वान् कामान् प्रयच्छति ॥ ज्येष्ठे मासि सिते पक्षे द्वादश्यां जलधेनुकाम्। दत्त्वा विप्राय विधिना प्रीणय त्यम्बुशायिनम्।। यत्र वा तत्र वा काले यद्वा तद्वा प्रदीयते। विशेषार्थमिदं प्रोक्तं नान्यत् काले निषेधनम्।। विष्णुमुद्दिश्य विप्रेभ्यो निःस्वेभ्यो यत् प्रदीयते भवेत्तदशनं दानं उक्तमल्पाक्षरैरिदम्।। काले पात्रे तथा देशे धनं न्यायार्जितं तथा। यद्दत्तं ब्राह्मणश्रेष्ठे तदनन्तं प्रकीर्तितम् ॥ चन्द्रे वायदिवा सूर्य्ये दृष्टे राहौ महाग्रहे। अक्षय्यं कथितं सर्वं तदप्यर्के विशिष्यते। द्वादशी पुण्यशुक्लासु विशेषाच्छ्रावणेन तु।। यत्र प्रदीयते किञ्चित्तदनन्तं द्विजोत्तम।। वैशाखे शुक्लपक्षे तु विशेषादपि मानवः।। आषाढी कार्त्तिकी चैव फाल्गुनी तु विशेषतः। तिस्रश्चैताः पौर्णमास्यो दाने विप्र! महाफलाः।। व्यतीपातेषु सर्वेषु समर्क्षेषु द्विजोत्तम।। ग्रहसंक्रमकाले तु तीव्ररश्मे विशेषतः ॥ तुला मेषप्रयोगेषु योगेषु मिथुनस्य च। रवेर्महाफलं दानन्तेभ्योऽपि स्यान्महाफलम् ।। यदा प्रविशते भानु मकरं द्विजसत्तम।। आषाढेऽश्वयुजे पौषे चैत्रे शुक्ले तथैव च ॥ द्वादशीसहितं प्रोक्तं पुण्यं दिनचतुष्टयम्। मिथुनञ्च तथा कन्यां धन्विनां मीनमेव च।। प्रविष्टे भास्करे पुण्यं कथितं द्विजसत्तम।। षडशीतिमुखं नाम दाने दिनचतुष्टयम् ॥ अच्छिन्ननाड्यां यद्दत्तं पुत्रे जाते द्विजोत्तम।। संस्कारे चैव पुत्रस्य तदक्षय्यं प्रकीर्तितम्।। एताश्च विविधाः प्रोक्ताः स्वाश्च कार्य्या यथोदितम्। सर्वास्वपि हि सद्विप्रैरित्थं धर्ममभीप्सुभिः ॥ सत्सन्नमेधि द्विज नालब्धि सिद्ध्यर्थमुक्तानि कियन्ति विप्राः।। दानानि वक्ष्याम्यथ पूर्तधर्मं प्राधेन पुंसोर्विहितेन धर्मः।। ब्रह्मेशहरिसूर्याणां स्कन्धे भास्या-

शिवे तथा। ईशदुर्गाग्रहाणाञ्च गृहाणि कारयेन्नरः॥ इष्टकामशतं वा पि यश्चार्पयति विष्णवे। अनेन विधिना कुर्यात् विष्णुलोक मवाप्नुया- त्॥ एवं यः सर्वदेवानां मन्दिरं कारयेन्नरः। स याति वैष्णवं लोकं प रितुष्टो हरिर्नरः॥ समाचरति यो भग्नं सुधया लेपयेद्यथा। शुभ्रं प तिञ्च यस्तन्तु विशिष्टे र्देवलेपनैः॥ सम्मार्ज्जयति यस्तन्तु यथाचैवा- नुलेपयेत्। प्रदीपन्तत्र यो दद्यात् स याति विष्णुलोकताम्॥ पूजयेद्य- स्तु विधिना पञ्चोपचारसंयुतः। स विष्णुलोकमभ्येति क्रीडते च चतु र्भुजे॥ यावत्तत् श्रेष्ठिकास्तत्र वित्तदेवस्य सद्मनि। तावन्त्यब्दसहस्रा णि विष्णुलोकं समाविशेत्॥ स नित्यन्तत्तडाकानि पुष्करिण्यश्च दी र्घिकाः। तथा कूपाश्च कर्त्तव्या वाप्यश्च गृहमेधिभिः॥ खातमात्रञ्च कर्त्तव्यं एकादिकजलं नरैः। यावत्पीत्वा जलं गौस्तु तृषार्त्तापि तृषी भ वेत्॥ पिबन्ति सर्वसत्वानि तृषार्त्ता अम्भसामिव। गण्डूषानि तु ताव न्ति तत्कर्त्ता तत्समन्दिवि॥ यावन्ति ह्युपकुर्वन्ति गण्डूषानि क्रियासु च। कुर्वतां स्नानशौचादि यावदाचमनं तथा॥ तावत्संख्यानि वर्षा णि लक्षाणि दिवि मोदते। अथ स च विशेत् स्वर्गे सेव्यमानोऽप्सरो गणैः॥ आरामाश्चापि कर्त्तव्याः शुभवृक्षैः सुशोभितैः। अश्वत्थोदुम्ब रपुलक्षचूतराजादनीवरैः॥ जम्बूनिम्बकदम्बैश्च खर्ज्जूरै र्नारिकेलकैः। बकुलैश्चम्पकैर्हृद्यैः पाटलाशोककिंशुकैः। द्रुमैर्नानाविधैरन्यैः फलपु ष्पोपयोगिभिः॥ जातीजपादिपुष्पैस्तु शोभिताश्च समन्ततः। फलोप योगिनः सर्वे तथा पुष्पोपयोगिनः॥ आरामेषु च कर्त्तव्याः पितृदेवोप योगदाः। गाथामुदाहरन्त्यत्र तद्विदः कवयोऽपरे॥ वृक्षारोपणकं पुं सा मुक्ता याः पुण्यवाचकाः। अश्वत्थमेकं पिचुमर्दमेकं न्यग्रोधमेकं दशाचिञ्चिणीश्च। षट्चम्पकं तालशतत्रयं च पञ्चाम्रवृक्षैर्नरकं न प श्येत्॥ यावन्ति खादन्ति फलानि वृक्षाः क्षुद्व्क्लिदग्धस्य तु मृद्गणो- घान्। वर्षाणि तावन्ति वसन्ति नाके वृक्षौघकर्तृपुरुषाः स्वमरौघसे-

न्त्याः॥ पुष्पाणि यावन्ति च पुष्पिणस्तु दिवौकसां मूर्ध्नि धरातले वा। पतन्ति तावन्ति च वत्सराणां कल्पानि वृक्षैर्दिवमारुहन्ति॥ यत्कालपद्यैर्मधुरैरजस्रं शाखाच्युतैः स्वादुफलैर्नगाद्याः। सर्वाणि सत्त्वानि समर्पयन्त्व तनूश्राद्धदानेनच वृक्षनाथान्॥ उद्दिश्य विष्णुं जगतामधीशं नारायणं यत्पुरुषः करोति। आनन्त्यमाप्नोति कृतं तु तस्मादनन्ततोयं भगवान् पुराणः॥ दानानि सर्वाण्यभिधाय विद्वन्! निष्टञ्च पूर्तं गृहमेधिकर्म। कुर्वन्ति शान्तिं मनुजाः शुभाय वक्ष्यामि तत्स्यादथसर्वशान्त्यै॥ उक्तानि सर्वदानानि इष्टापूर्तञ्च सत्तमाः!। अतःपरं भवक्ष्यामि गणेशादिकशान्तयः॥ ॥ इति श्रीवृहत्पाराशरीये धर्मशास्त्रे सुव्रतप्रणीतायां धर्मसंहितायां दानधर्मेषु पूर्तविनिर्णयो नामाष्टमोऽध्यायः॥

शान्तीनामथ सर्वासां ग्रहशान्तिः परा स्मृता। ग्रहेभ्योऽपि गणेशस्तु तस्य शान्तिरथोच्यते॥ यदि पुङ्कृत कर्माणि भवन्ति फलदानि हि। तदा धर्मार्थकामास्तु संसिध्येरन् सदा नृणाम्॥ तन्नृभिः क्रियमाणानां सर्वेषां कर्मणामयम्। विघ्नार्थमसृजद्ब्रह्मा शङ्करश्च विनायकम्॥ तेनोपहतपुंसान्तु कर्म स्यान्निष्फलं कृतम्। स्त्रीणामपि तथा सर्वं क्रियमाणन्तु निष्फलम्॥ जलावगाहनं स्वेन कृव्यादारोहणं तथा। खरोष्ट्रम्लेच्छसंसर्गं गुडकाषायवाससम्॥ पश्यन्त्यात्मानमेवेह सीदन्तं प्रतिवासरम्। यानि कर्माणि कुर्वीत तानि स्युः क्लेशदानि हि॥ राजपुत्रो न राज्याप्ता यद्याप्ता न तु कन्यका। अन्तर्वर्तिन्यपत्याप्ता आचार्ये तु न सा द्विज!॥ अधीयानास्तु विद्याप्त्या कृषिकृत्सस्यसम्पदा। वणिग्वर्तन लाभेन युज्यन्ते तद्वतश्च सन्॥ तस्मात्तदुपशान्त्यर्थं समभ्यर्च्य गणेश्वरम्। स्नपनङ्कारयेत्तस्य विधिवत्पुण्यवासरे॥ श्वासनासीनं संस्नाप्य आरक्तार्षभचर्मणि। सितसर्षपकल्केन साज्येनाच्छादितस्य च॥ विलिप्तशिर

सस्तस्य गन्धैः सर्वैस्तथौषधिः। अष्टौ वा चतुरो वापि स्वस्ति वाच्यं द्विजान् शुभान्॥ एकवर्णैश्चतुर्भिश्च पुम्भिः कुम्भैश्च यज्जलम्। समानीतं क्षिपेत्तत्र वक्ष्यमाणमृदस्त्विमाः॥ अश्वेभस्थानव-ल्मीके ह्रदसङ्गममृत्तिका। रोचनां गुग्गुलं गन्धान् तस्मिनम्भसि तान् क्षिपेत्॥ यत्ते द्वैपायनं स्नानं सहस्राक्ष मृषिस्मृतम्। तेन त्वा शतधारेण पावमान्यः पुनन्त्विमाः॥ नचाभिः पावमानीभिः कुम्भमन्तमक्षिमन्त्रयेत्। शक्रादिदशदिक्पाला ब्रह्मेशकेशवादयः॥ आपस्ते घ्नन्तु दौर्भाग्यं शान्तिं ददतु सर्वदा। सुमित्रियान इत्याद्यै मन्त्रैर्नैकाभिषेचनम्॥ वदन्ति वदतां श्रेष्ठाः दौर्भाग्यस्योपशान्तये। समुद्रा गिरयो नद्यो मुनयश्च पवित्रता॥ दौर्भाग्यं घ्नन्तु मे सर्वे शान्तिं यच्छन्तु सर्वदा। पादजङ्घोरुजङ्घाश्च नितम्बोदरनाभिषु॥ स्तनांसे बाहुहस्ताग्रग्रीवा अंसाङ्गसन्धिषु। नासा ललाटे कर्णभ्रूः केशान्तेषु च यत्स्थितम्॥ तदपो घ्नन्तु दौर्भाग्यं शान्तिं यच्छन्तु सर्वदा। स्नातस्य मस्तके दर्भान् सव्येन परिगृह्यते॥ जुहुयात्सर्षपन्तैलमौदुम्बरस्रुवेण तत्। मितश्च संमितश्चैव तथा सालकटङ्कटौ॥ कूष्माण्डो राजपुत्रश्चेत्यन्तस्वाहा समन्वितैः। नामभिश्च बलिं दद्यान्मन्त्रैर्नाम स्वधान्वितैः॥ चतुष्पथं समाश्रित्य सूर्य्ये कृत्वा कुशांस्ततः। निधाय तेषु दर्भेषु शुक्लाशुक्लांश्च तण्डुलान्॥ ओदनं पललोपेतं यत्कामान्मत्स्यकानपि। तथा मांसञ्च कुल्माषान् तत्रैव त्रिविधां सुराम्। पूरिकेण्डेरिकान् पूपान् फलानि मूलसंस्रजः॥ गच्छेत् स मातुःपार्वत्याः कुर्यादुपस्थितं पुनः। दूर्वासर्षपपुष्पैश्च पूर्णमार्षाञ्जलिं क्षिपेत्॥ सौभाग्य मम्बिके! देहि भगरूपं यशोऽपि च। श्रियो युक्तांश्च कामांश्च तथा शौर्यञ्च देहि मे॥ गणेशमात! रम्बाले! यत्किञ्चिन्मदभीप्सितम्। एतच्चाम्बे! च तद्देहि देहि गौरि! वरान् वरान्॥

अतस्तु वाससी शुक्ले परिधायाहते शुभे। सितचन्दनलिप्ताङ्गः सित स्रग्भूषणान्वितः॥ तान् नत्वा च द्विजान् सर्वान् भोजयेद्विविधाशनैः। वस्त्रयुग्मं गुरोर्दद्यात्तेतु तस्य वराशिषः॥ एतानि सम्पूज्य गणाधिदेवं विघ्नोपशान्त्यै जननी तथास्य। स्मार्तोक्तिसम्यग्विधिना समासा त्साप्नोति चान्यान्मनसा यमिच्छेत्॥ स्नात्वा विधायाऽर्चनमम्बिकायाः सम्पूज्य लोकान् सखिबन्धुलोकान्। आचार्यवृद्धान्वनिता कुमारी प्रध्वस्तविघ्नः श्रियमेति गुर्वीम्॥ स्मृत्युक्तमन्त्रैर्विधिवत्स युक्ते नित्यं द्विजानन्दनपूजनं च। कृतान्तरायान्विनिहत्य सर्वान् कुर्यादथातो ग्रहयागमेनम्॥ इति श्रीवृहत्पाराशरीये धर्मशास्त्रे शान्त्यध्याये विनायकशान्तिः सम्पूर्णा॥

मुनीनां व्याससुख्यानां शुश्रूषानुपुरोऽब्रवीत्। शुभाय ग्रहपूजायां वदतस्तानि बोधत॥ यद्वर्णा यत्सुतान्विद्वान् जाता देशेषु येषु च। तेषां तदधिदैवत्यं सन्निधौ दक्षिणाय च॥ यस्य यस्य च दिग्भागे मण्डलं स्याद्विवस्वतः। होमकर्मणि यो विप्रो या सन्ध्या समिधावपि। अग्निकुण्डप्रमाणन्तु प्रमाणं समिधामपि॥ सर्वमेव यथोद्देशं वक्ष्यामि द्विजसत्तम॥ रक्तः काश्यपजो भानुः शुक्लो ब्रह्मसुतः शशी॥ रक्तो रुद्रसुतो भौमः पीतः सोमसुतो बुधः। पीतो ब्रह्मा सुराचार्य्यः शुक्लः शुक्रो भृगूद्वहः॥ कृष्णः शनीरवेः पुत्रः कृष्णो राहुः प्रजापतिः। कृष्णः केतुः कृशानुश्च कृष्णपापास्त्रयोऽप्यमी॥ कालगोऽयं पुनः सोम आवन्त्यः सोम उच्यते। मागधो बुधइत्युक्तो गौतमस्तु बृहस्पतिः॥ सैंधवो दानवाचार्यसौरिसौराष्ट्रदेशजः। राहुशङ्खलदेशोत्थो मध्यदेशभवोऽग्निभूः॥ जन्मदेश इमे प्रोक्ताः ग्रहजातक वेदिभिः। शम्भुं रविं पुमान् चन्द्रं स्कन्धं भौमं हरिं बुधम्॥ ब्राह्मणञ्च गुरुं विद्याच्छुक्रं शुक्रं यमं शनिम्। कालं राहुं चित्रगुप्तं केतुमित्यधिदैवतम्॥ एतद्विज्ञाय यत्कुर्य्यात्तत्सर्वं सफलं भवेत्। अर्कस्त्वर्काय

होतव्यः सर्वव्याधिप्रणाशनः॥ सुधामुचे च सोमाय पालाशः सर्वकामिकः। खदिरश्चार्थलाभाय मङ्गलाय विवेकिभिः॥ स्व रूपकृदपामार्गो होतव्यश्च बुधाय च। प्रभाप्रदस्तथाश्वत्थो होतव्योऽमरमन्त्रिणे॥ अजी सौभाग्यकृद्देया दैत्यामात्याय सद्द्विज। धर्मविद्यार्थकृद्दर्भान् स द्विजे वह्निसूनवे॥ दधिक्षीराज्यसंमिश्राः समिधः शुभरूद्दये। शमी पापोपशान्त्यर्थं होतव्या मन्दगामिने॥ दीर्घायुर्धर्मकृद्दूर्वा होतव्या राहवे द्विज॥ प्रादेशमात्रका सर्वा अष्टा वष्टोत्तरं शतम्॥ अष्टाविंशतिरेकैकं सङ्ख्यैषा प्रतिदैवतम्। वृन्मातु फलभूयस्त्व मुक्तादन्यत्र राक्षसम्॥ नव भुवनकं लेख्यं चतस्रं मण्डलं द्विज॥ ग्रहांस्तत्र प्रतिष्ठाप्य वक्ष्यमाणक्रमेण तु॥ मध्येतु भास्करः स्थाप्य पूर्वदक्षिणतः शशी। दक्षिणेन धरासूनु र्बुधः पूर्वोत्तरेण तु॥ उत्तरस्यां सुराचार्यः पूर्वस्यां भृगुनन्दनः। पश्चिमायां शनिः कुर्य्यात् राहुर्दक्षिणपश्चिमे॥ पश्चिमोत्तरतः केतुरिति स्थाप्याः ग्रहाः क्रमात्। पटे वा मण्डले लेख्या ईशान्यां दिशि पावकान्॥ भास्करः स्फटिकश्चन्द्रो रक्तचन्दनकोऽपरः। सोमसूनु सुराचार्य्यौ स्वर्णशोभौ प्रकीर्तितौ॥ रजतो भृगुपुत्रस्य कार्ष्णश्च स शनैश्चरः। राहुश्च सैषकः कार्यः कार्यः केतुश्च कांश्यकः॥ सर्वानेतन्मया कृत्वा समभ्यर्च्य सदा गृही। लेखयेद्वर्णकैः स्वैः स्वैर्विधिवत्पीठकेन वा॥ ग्रहाणां साधिदेवानां प्रतिष्ठापन मन्त्रकान्। वदन्ति मन्त्रतत्त्वार्थवेदिनो द्विजसत्तम॥ आदित्यं गर्भमित्युक्त मग्निं दूतमनेन वा। एताभ्यां स्थापयेदर्कं त्र्यम्बकम् इति शङ्करम्॥ अप्स्वन्तरीति शीतांशुः श्रीश्च त इति पार्वती। स्योना पृथ्वीति भौमञ्च य इन्द्रं देति वा गुहम्॥ इदं विष्णु र्बुधः स्थाप्य ताद्विष्णोरिति वै हरिम्। इन्द्र आसां सुराचार्य्य आब्रह्माणं निबोधकम्॥ इन्द्र देवी भृगोः सूनुं सयोषेत्यमराधिपम्। शन्नो देवी रवेः

सूनुं यमाय त्वा तथा यमम्॥ अयं गौरिति राहुश्च कालं कार्षीरसीति च। ब्रह्मजज्ञेति केतुश्च चित्रं चित्रावसोरिति॥ब्रूयुरेतानि मन्त्राणि मूलमन्त्राणि चापरे। आकृष्णेनच तीव्रांशोरिमन्देवा निशाकरम्॥ अग्निर्मूर्धेति भूसूनोरुद्बुध्यस्व बुधस्य च। बृहस्पतेरिति गुरो रन्नात्परिस्रुतो भृगोः॥ शन्नोदेवी शनेर्गन्तुः काण्डात् काण्डात्परस्य च। केतुं कृण्वनग्निसूनुरयमंशः प्रकीर्तितः॥ वेदमन्त्रैः सदा पूज्या विधिना ते द्विजन्मना। कर्त्तव्याश्चरवो मन्त्रैः स्वैः स्वैश्च प्रतिदैवतम्॥ सघृता सयवाश्चापि होतव्याश्च द्विजैस्तिलाः। मध्यमानामिकामूललग्नाङ्गुष्ठं चतसृभिः॥ यावन्तोऽङ्गुलिभिर्ग्रासा स्तिला स्तावत्तवाहुतिम् हस्तमात्रं पृथक्त्वेन वेधोऽपि तावतैव तु॥ वाहुमात्रं वदन्त्येके एके चारत्निमात्रकम्। चतुरस्रं खनेत्कुण्ड मेकयोनिसमन्वितम्॥ शुभमेखलया युक्तं सुशान्तिकरमुत्तमम्। होमार्थं मण्डलं कुर्य्याच्चतुर्द्वारसमन्वितम्॥ चतुर्दिक्षु ध्वजाः कार्या नानावर्णाः शुभावहाः। तथा तत्रोदकुम्भाश्च दूर्वापल्लवसंयुताः॥ पुनर्नवीकृतं पद्मं मण्डपाभावमाश्रयेत्। षट्कर्मनिरताः शान्ता ये न दग्धाः प्रतिग्रहे॥ नियोज्यास्तेऽग्निकार्यादौ स्फुरन्मन्त्रा द्विजोत्तमाः। प्रतिग्रहाग्निदग्धश्च जपहोमादि कुर्वतः॥ यस्य मन्त्राण्यवीर्याणि तत्कृतं कर्म निष्फलम्। ओदनं सगुडं भानोः पायसं शशिन स्तथा॥ हविष्यं भूमिपुत्रस्य क्षीरान्नञ्च बुधस्य च। पूर्णं हविः शनेः केतो र्माषं राहोः सृतामृतम्॥ चित्रान्नमग्निसूनोश्च भोज्यानामपि यस्य याः। होमं कृतस्तथान्येऽपि सहृत्ताय द्विजाग्रजाः॥ यथावर्णानि वासांसि देयानि कुसुमानि च। देया गन्धाश्च सर्वेषां देयो धूपश्च गुग्गुलः॥ धेनुः शङ्खो वृषः स्वर्णं वासोऽश्वश्चासिता च गौः। आविश्छागलकश्चैव क्रमशो दक्षिणाः स्मृताः॥ प्रत्यहं प्रतिमासञ्च प्रत्यब्दं वा विधानतः। वर्णिभिश्च ग्रहाः पूज्या राजभिस्तु सदैव हि॥ दुःखितो यस्य यस्तु स्यात् पूज्य-

स्तस्य सयत्नतः। वेधसैते नियुक्ताः प्राक् स्वभक्तं पूजयिष्यथ॥ वरं ददाति संहृष्टा विप्रा अग्नि र्नृपा ग्रहाः। असन्तुष्टा दहन्त्येते तस्मात्तानर्च येत्सदा॥ ग्रहाधीन मिदं सर्वं उत्पत्ति प्रलयात्मकम्। जगत्प्रभावभागैच तस्मात्पूज्यतमा ग्रहाः॥ सानुकूलै ग्रहैर्यानि कुर्यात्कर्माणि मानवः। सफलानि भवन्त्यस्य निष्फलानि स्युरन्यथा॥ कुर्वन्ति चैतद्विधिना ग्रहाणा मातिथ्यमब्दं प्रतिवासरं ये। आरोग्यदेहा धनधान्ययुक्ताः दीर्घायुषः स्त्रीशतगा भवन्ति॥ इति बृहत्पाराशरीये धर्मशास्त्रे ग्रहशान्तिर्नाम शान्त्यध्यायः।

वसेत्स कस्मात्सदनेष्वतोऽद्भुतं वयोवसेयुर्यदरण्यवासिनः। विशेषतो गृध्रकपोतपिङ्गलास्तथैव चोलूकसकाकवायसाः॥ नरस्तुगोमायुमृगायुगोभिर्हि धाप्यकस्मादकुतोऽपि निर्भयः। विशन्ति यत्वेतदतीव चाद्भुतम् गृहे पुरे तच्छनिकृते हि सिद्धये॥ अथाद्भुतानि जायन्ते वर्णानां गृहमेधिनाम्। नानाविधानि तेषान्तु प्रशान्त्ये शान्तिरिष्यते॥ यस्याद्भुतानि जायन्ते गृहे तस्य समादिशेत्। धनधान्यक्षयो वापि पुत्रभार्य्याक्षयस्तथा॥ भयम्वा जायते शत्रो राज्ञो वा जायते भयम्। शान्तिस्तत्र विधातव्या यथोक्तं मुनिपुङ्गवैः॥ यदि गोधूमशाखायां यवशाखोपजायते। यवगोधूमशाखाश्च देव सर्वाशनेषु च॥ सर्षपे तिलशाखा च तिले शाखासु सर्षपम्। माषे मुद्गस्तु मुख्ये स्यात् असृग्वृष्टिर्भवेद्यदि॥ अम्भः पूर्णे तु कुम्भे तु ज्वलदग्निमवेक्षते। उद्वपनन्तु कूपानां मत्तो वा मधुजालकम्। विधिवद्वायुलिङ्गैश्च निर्वाप्य पायसं चरुम्॥ महावाताय वाताय तद्धृदयं प्रशाम्यतु। त्रिपञ्चसप्त वा कृत्वा सर्वत्र ह्यत्र तुल्यता॥ स्त्रियो गौर्वा माहिष्यावा सुतौ वत्सौ च षण्डकौ। द्वौ द्वावाशु प्रजायेते तत्र शान्तिर्विधीयते॥ वृषपद्मोह्यं नर्देत् वडवाश्ववदाहरेत्। अश्वतरी प्रसूते वा प्रस्वेदः प्रतिमासु च॥ मृदङ्गपटहादीनामकुतोऽपि

ध्वनिर्यदा। काकगृध्रकपोताद्याः प्रविशेयुर्गृहे पुरे॥ यवपिष्टेन नि लिप्य विधिवद्वारुणं चरम्। मन्त्रैर्वरुणदैवत्यै र्जुहुयाद्वरुणाय नम्॥ महावरुणदेवाय ह्यपाञ्च पतये तथा। अन्यै र्वरुणदैवत्यैर्मन्त्रैश्च जुहुयाच्चरुम्॥ विप्रस्तु जुहुयान्मन्त्रैरेतेन वरुणाय नम्। अन्यस्य तु ल्यतां कृत्वा स्वाहान्तैर्वरुणदैवतैः॥ इन्द्रचापेक्षणं रात्रौ शस्त्रप्रज्व लनन्तथा। गजश्च शफवस्यान्त ज्वलनं प्रतिवीक्षणम्॥ स्थूणाप्ररो हणं यत् स्याद्भाण्डस्थानप्ररोहणम्। विद्युन्निर्घातवज्राणां पतनं वा भवेद्यदि॥ मृदाकुङ्कुमकसंसर्ग विपरीतप्रदर्शनम्। शुभाय चरुरा ग्नेयो निर्वाप्यो विधिवद्द्विजैः॥ अग्नये त्वग्निराजाय महावैश्वान राय च। हृदये मम यत्त्वेतत्सर्वत्र च वदेद्बुधः॥ गृहशान्तिश्च सर्वत्र शनिपूजा तथैव च। दक्षिणा सवृषा गौस्तु वस्त्रयुग्मं द्विजातये॥ ए तेषु चान्येष्वपि चाद्भुतेषु जातेषु सावित्रजपं सहस्रम्। होमं विदध्या दपि विष्णुमन्त्रै र्ब्रह्मेशमन्त्रैरपि वा द्विजोत्तमैः॥ ॥इति वृहत्परा शरीये शान्त्यध्याये अद्भुतशान्तिः॥

अभिधास्येऽथ रुद्राणां शान्तये गृहमेधिनाम्। पञ्चानाञ्च वि धानन्तु यत्कृतं हन्ति पातकम्॥ ब्राह्मणा विधिवत् स्नात्वा सर्वोप द्रवनाशनम्। कुर्युर्विधानं रुद्राणां यजुर्विधाननिर्मितम्॥ इषेत्वादि षु मन्त्रेषु खं ब्रह्मा तेषु या क्रिया। दशप्रणवयुक्तेषु भूर्भुवःस्वरितीति च॥ आर्षच्छन्दश्च दैवत्यं न्यासञ्च विनियोगतः। पराशरोदितं यस्य शेषं मुनिविभाषितम्॥ मनोज्योतिरबोध्याग्निमूर्धनिश्च मर्माणि ने मानस्तोक इति ह्येतत्प्रथमं पञ्चकं स्मरेत्॥ याते रुद्रेति धु आयाशि रोऽस्मिन्महदर्णवे। असंख्यातसहस्राणि ललाटे विन्यसेद् बुधः॥ च क्षुषोर्विन्यसेद्धेतु त्र्यम्बकञ्च यजामहे। मानस्तोक इति ह्येतन्नासि कायां न्यसेद् बुधः॥ अवतत्य धनुर्वक्त्रे नीलग्रीवाय वा गले। नमस्त आयुध इत्येतत्स्वरे मन्त्रप्रकोष्ठके॥ विन्यसेद्वास्तु मन्त्रोऽयं येनीर्था

निति हस्तयोः। नमोऽस्तु किरिकेभ्यो वै हृदये मलनाशनम्॥नाभ्यां विद्वान् न्यसेत् पत्रं नमो हिरण्यबाहवे। गुह्यमन्त्रस्तु संस्मार्य इमा रुद्राय इत्यपि॥मानो महान्त इत्योर्वो एषते रुद्रेति जानुनोः॥ अवरुद्रमिति ह्येतज्जङ्घयोर्मन्त्रमुच्चरेत्॥कवचे मध्यमेतद्वै तदुपरि स्थित इति। नेत्रन्तु नीलग्रीवाय प्रमुञ्चन् मनोऽण्डकम्॥ य एतावन्त एतेन विद्ध्युर्दिक् प्रबन्धनम्। ॐमितिच नमस्कारभवाच ते ततः पुनः॥ रुद्रायेति विधानज्ञो दशाक्षरन्तदा न्यसेत्। प्रणवं विन्यसेन्मूर्ध्नि नकारं नासिकान्तरे॥ मोकारन्तु ललाटे तु भकारं मुखमध्यतः। गकारं कंठदेशेतु वकारं हृदये न्यसेत्॥ तेकारं दक्षिणे हस्ते रुकारं वामतो न्यसेत्। द्राकारं नाभिदेशेतु यकारं पादयोर्न्यसेत्॥ त्रातारमिन्द्रं त्वन्ताग्नेस्सुगन्नः पन्थानमिति ह्यपि। तत्वा यामि वदेदानो नियुद्भिरित्यपीरयेत्॥ वयं सोम तमीशानं असमैरुद्रा इति स्मरेत्। स्योना पृथिवी ह्येतन् कुर्वीत संपुटं द्विजः। सुत्रामादि दिशांपालान् प्राच्यादिषु स्मरेदथ॥ रौद्रीकरणमेतद्वै कृत्वा पापैः प्रमुच्यते। यक्षरक्षःपिशाचाद्याः प्रेतभूतग्रहादिकाः॥ दुष्टदेत्याश्च शाकिन्यो रेवत्यो वृद्धकाश्च याः। सिंहव्याघ्रादयोऽरण्ये दुष्टश्वापदहा निजाः॥ म्लेच्छवधकचोराद्या यमदूत मृदाकवः रौद्रभूतमिमं सर्वे द्विजं पश्यन्ति वह्निवत्॥ देदीप्यमानमर्चिर्भिः दुष्टदृग्वधकारकः। दह्यमानो दवीयः सु सप्तधामसु धामभिः॥ प्रणश्यन्ति हि ये दुष्टा द्विजास्ते रुद्ररूपिणः। पञ्चास्यसौम्यमात्मानं सर्वाभरणभूषितम्॥ मृगलाञ्छनमूर्धानं शुद्धस्फटिकसान्निभम्। फणासहस्रविस्फूर्जद्दुरगेन्द्रोपवीतिनम्॥ सप्तार्चिषं ज्वलज्ज्वालं जटाजूट किरीटिनम्। सहस्रकरपादाब्जखट्वाङ्गाङ्गविभूषितम्॥ ब्रह्माण्डखण्डचक्रारं नृकपालकधारिणम्। देदीप्यमानश्चन्द्रार्कज्वलदग्नित्रिनेत्रिणम्॥ त्रैलोक्यज्योतिः रुद्रास्त्वतूस्क

न्धकपालमालिनम्। दीप्तनक्षत्रमालाभदक्षमल्लाधरद्विजः॥नि:
शेषवारिसम्पूर्णं कमण्डलुधरं ध्वजम्।जगत्व्याधियकन्नादद
ण्डमेरुकधारिणम्॥केयूरबद्धनागेन्द्रमूर्धमणि विराजितम्। वि-
चित्र किङ्किणीं मालां मुक्ताराव विराजितम्॥ घर्घराव्यक्तनिर्ग-
च्छद्गम्भीरारावनूपुरम्। सहेमपट्टनीं लाभ व्याघ्रचर्मोत्तरीयकम्
॥विद्युल्लताप्रभागङ्गं शुभ्रमूर्धसुरार्चितम्। समस्त भुवनाभाव ध
रणोच्छासनस्थितम्॥ त्रैलोक्यवनितामूर्धानं तद्देहार्धञ्च पार्वती
म्। लक्षसूर्यप्रभाभास्वत् त्रैलोक्यकृतपाण्डुरम्॥ अमृतपुतहृष्ट
तुं दिव्यभोगसमाकुलम्। दिग्दैवतैः समायुक्तं सुरासुरनमस्कृतम्।
नित्यं शाश्वत मव्यक्तं व्यापिनं नन्दिनं ध्रुवम्॥ द्विजो ध्यात्वा भवा-
त्मानं सम्यक् ग्रहस्वरूपिणम्। सप्तपद्यस्तान्तरायः सन्ततोयजन-
मारभेत्॥अनुलिप्ते सुगुप्ते च देशे गोचर्ममात्रके। स्थण्डिलाम्बुज
मालिख्य मन्त्रैः प्रक्षाल्य तं पुनः॥ तत्र पूजादिकं कुर्यान्नमश्च शा-
म्भवाय च। मानो महान्त इति च सिद्धमन्त्रं स्मरेद्द्विजः॥ स ललाटे
पुनर्ध्यात्वा तेजोरूपं पुनर्द्विजः। दशाक्षरेण मन्त्रेण दद्यात्पाद्यादि
कं पुनः॥ न्यासमन्त्रैश्च सोङ्कारैर्मानस्तोक इति ह्यपि। शम्भवे
इति मन्त्रेण दद्याद्गन्धोदकादिकम्॥पुष्पधूपञ्च दीपादि यथाला
भं निवेदिकम्। दशाक्षरेण तेनैव ततः कुर्यात् पुनर्द्विजः॥ शिखा त
स्य तु रुद्रस्योत्तरनारायणं द्विजः। शिरः पुरुषसूक्तञ्च शिवसङ्क
ल्पहृदयकृत्॥ कवचञ्चाप्रतिरथ नेत्रविभ्राट् वृहत्सिवत्। शतरुद्रीय
मन्त्रेण देवस्यास्त्रं प्रकल्पयेत्॥पञ्चाङ्गानि स्मरेद्दृष्टप्रणवं पूजये
द्विजः। उद्धृत्य प्रणवेनेशं विकिरन्द्रेति विसर्जयेत्॥रुद्ररूपी द्विजो
यश्च कुर्यात्तद्धि च सिध्यति। अक्षतान्वा तिलान्वापि यवान्वा समि-
धोऽपि वा॥ शम्भवे इति जुहुयात् सर्वांस्तानाज्यसिक्तकान्। पञ्च
पञ्चाथ षड्वाथ अष्टावष्टौ तथापि च॥ दशदशैकादश वा जुहुया-

त्साधको द्विजः। द्विजः स्वदारसन्तुष्टः शुचिः स्नातो जितेन्द्रियः॥ जपतर्पणहोमादौ रतो यो वत्सरं जपेत्। दशानामश्वमेधानां फलं प्राप्नोति वै द्विजः॥ सौवर्णं पृथिवीदान पुण्यभावः प्रजायते। महापापोपपापेभ्यश्च मुक्तो रुद्रत्वमृच्छति॥ एकादशगणान् रुद्रानावृत्यं याति रुद्रताम्। रुद्रजापी शुचिः पुण्यः पाङ्क्तेयः श्राद्धभुग्वरः॥ वंशानां विंशतिञ्चैकान्तारयेद्रुद्रजाप्यकृत्। एकतो योगिनः सर्वे ज्ञातिभिः सह सङ्गतैः॥ एकतो रुद्रजापी तु मान्यः सर्वस्वदैवतैः। पात्रमत्र पवित्रञ्च नाधिकं रुद्रजापिनः॥ तस्मै दत्तं हुतम्भुक्तन्तदानन्त्याय कल्प्यते। अथातः सिद्धिकामः सन् कन्दमूलफलाशनः॥ गोमूत्रयावकक्षीर दधिशाकान्न भोजनः। हविष्यभोजनो वास्मै विशायोसन्नभोजनः॥ जपहोमादि कुर्वाणो यथोक्तफलभाग्भवेत्। शिरः साहस्ररुद्राणां जप्तैर्दशशतैर्ध्रुवम्॥ सर्वे मन्त्रा भवन्त्यस्य ब्राह्मणस्योक्तकारिणः। सिद्धमन्त्रा भवन्त्यस्य चिन्तितार्थफलप्रदाः॥ रुद्रस्यैवास्य सर्वे ते भवन्तीश्वरनोदिताः। एकादशशुभान् कुम्भान्माहृत्य विधिसम्मितान्॥ सहिरण्यान् सवस्त्रांश्च फलपुष्पोपशोभितान्। गन्धोदकाक्षतैर्युक्तान्नमस्कृत्वाऽभिमन्त्र्यच॥ एकादशमहात्मान मन्यं वा हितकाम्यया। विनायकोपसृष्टञ्च स्थापयेत् कापदाहृतम्॥ धृतवत्सां काकवन्ध्यां स्नापयेच्च तथातुराम्। जपन्नेतत्सकृद्विप्रः सर्वदोषैर्विमुच्यते॥ अनड्वाहञ्च वस्त्रञ्च दद्याद्धेनुञ्च दक्षिणाम्। भोजयेद्विदुषो विप्रान् समाप्तौ कर्मणो द्विजः॥ भक्त्यैकादशवस्त्राद्यैर्यथाशक्त्या समर्चयेत्। अथवा चरुभिः साक्षी शिरो रुद्रसहस्रकम्॥ जपे द्गोष्ठे तथारण्ये सिद्धक्षेत्रे च शिवालये। अग्न्यागारे समुद्रे च नदीनिर्झरपर्वते॥ जपेदन्यत्र वा विद्वान् शुचौ देशे मनोरमे। धीरो दृढव्रतो मौनी जितक्रोधो जितेन्द्रियः॥ श्वेतवासास्त्वधः शायी रुद्रलोके महीयते। नमो गणेभ्य इत्यस्य मन्त्रस्य ब्राह्मणो

ऽयुतम्। जप्त्वा च श्रीफले हुत्वा सर्वकार्य्ये तु सिद्धिभाक्। नमोऽस्तु नीलग्रीवायेत्येतन्मन्त्रेण सप्तधा॥ आवर्त्योदकमामन्त्र्य विषार्त्तं श्रवणे जपेत्। विषेण मुच्यते सद्यः काकदष्टोऽपिजीवति॥ विषस्यापि भवेन्नस्यात्तस्य नरस्य कर्हिचित्। ग्रहग्रस्तं ज्वरग्रस्तं रक्षः शाकिनि दूषितम्॥ ब्रह्मराक्षसग्रस्तञ्च अन्यदोषोपबृंहितम्। प्रमुञ्चन् धन्विन इति भस्मना सर्षपैस्तथा। ताडयेन्मुञ्च मुञ्चेति शीघ्रमेव विमुञ्चति॥ नमः शम्भवइत्यस्य मन्त्रस्यापश्शुभं द्विजः। जप्त्वा खादिरसमिद्भिश्च हुत्वा विप्रः सहस्रकम्॥ तीक्ष्णतैलप्लुतं सम्यक् मन्त्रान्ते भोजनम् वरम्। फट्कारेणच जुहुयात् तयोरेवाचिराद्भवेत्॥ जलमध्ये शतावृत्त्या सद्यो वृष्टिर्निगद्यते॥ नाभिमात्रे जले विप्रः प्रविश्य जुहुयाज्जलम्। कुर्यादेकार्णवां धात्रीं मन्त्रमाहात्म्यतो भृशम्॥ नमः श्वभ्य इत्यनेन मन्त्रेण तु सहस्रकम्। लवणं मध्वाहुतीनान्तु राजा शीघ्रं वशी भवेत्॥ द्विगुणाम्पलाशसमिधं महावाणी प्रजायते। त्रिगुणां नवपद्मानां पाताले सिद्ध्यति ध्रुवम्॥ चतुर्गुणेन मन्त्रेण वरदा श्रीः प्रजायते। समुद्रगा नदीतीरे पुलिने वा पवित्रके॥ खड्गोपरि श्रीफलानां हुत्वा त्रिगुणसहस्रकम्। अणिमादिकसिद्धीनामेभिरेव भवेद्द्विजः॥ छन्दोदैवतमार्षेयमथातः शतरुद्रिये। ज्ञानेन कर्मसम्पत्त्वं द्विजानां येन जायते॥ आद्यानुवाके रुद्राणां आद्यायाश्च ऋचि द्विजः। छन्दोगायत्र्यमन्यास्तु अनुष्टुप् तिसृषु स्मरेत्॥ पंक्तिस्तिसृषु विज्ञेया अनुष्टुप् तिसृषुस्मृताः। द्वयोश्च जगती विप्र उक्तमद्यानुवाककम्॥ आद्यानुवाके प्रथमा बृहती जगती तथा। अनुष्टुप्च तृतीयायां द्वयोस्त्रिष्टुप् स्मृता द्विज!॥ अपरासु तथाऽनुष्टुप्सु अनुवाकद्वयं स्मृतम्। रुद्रः सर्वासु देवत्वं विनियोगो यथोचितः॥ यज्जाग्रतादि षट्केच शिवसंकल्पमार्षकम्। रुद्रस्तु देवता षट्सु विनियोगो जपादिषु॥ अद्भ्यः सम्भृत इ

स्यादौ उत्तरनारायणस्त्वृषिः। पूर्वानुवाके दैवत्यं अनुष्टुप्छन्दः प्रकीर्तितम्॥ आशु शिशान इत्यादिरप्रतिरथ उच्यते। एतन्नाम्ना मुनिस्तत्र देवताऽमरेश्वरः॥ दैवत्यमापतेत् ह्यत्र छन्दस्त्रिष्टुप् प्रकीर्तितः। विभ्राड् बृहदित्यादौ सूर्यो दैवतमुच्यते॥एतत्सांविन्त्य सकलं द्विजाग्र्यो रुद्रजाप्यकृत्। यद्यदारभते तत्तद्यथोक्तफलदम्भवेत्॥ तदा ध्यायन् यत्पितॄणां श्राद्धनान्द्रविणस्य चाप्रजानामायुषः कीर्त्तिभूयस्त्वं रुद्रजापिनः॥ इमं पुण्यं पवित्रञ्च रहस्यं पापनाशनम्। रुद्रविधिं विधिश्रेष्ठ! कुर्याद्विप्रः शिवे रतः॥ कुर्याद्य एवं विधिवद्विधानं शाम्भोरजस्रम्प्रथितं द्विजेन्द्राः!। प्राप्नोति नाकं स शिवस्य साक्षादत्रापि स स्याच्छिववत्स पूज्यः॥ मन्त्राणि सर्वाणि च स द्विजस्य आदेशकर्तॄणि भवन्ति यस्य। यः साधयेत्प्रोक्तविधानयज्ञो मन्त्राभिपूज्यः स तु शम्भुवत्स्यात्॥ इति श्री बृहत्पाराशरीये शान्त्यध्याये रुद्रशान्तिः समाप्ता।

मन्त्रस्त्रिनेत्रं जुहुयाद्धुताशे योबिल्वपत्रैर्घृतदुग्धयुक्तैः। मृत्युञ्च हत्वा श्रियमेव ध्यात्वा प्राप्नोति पश्चाच्छिवलोकमेव॥ पञ्चभागास्तथा पञ्च पञ्चेन्द्राः पञ्चवारुणम्। षड्व्याहृतीर्जपित्वाथ सर्वपापैः प्रमुच्यते॥अथातः सम्प्रवक्ष्यामि तडागेष्टिविधिं शुभम्। येन कृतेन तेषान्तु प्रतिष्ठा सा प्रजायते॥अस्मात्तातस्य तातेन पृच्छति रघुपुङ्गवे। तडागाद्युत्सवविधिः प्रोक्तो सोऽयं प्रकीर्तितः॥ दीर्घिकासु तडागेषु सन्निहितासु यो विधिः। वशिष्ठः प्रोक्तवान् सम्यक् दशरथस्य पृच्छतः॥ तस्माद्यः श्रुतवान् शक्तिसूनवेऽतः पराशरः। तत्प्रसादेन तत्प्रोक्तो योविधिः संप्रचक्षते॥ तडागादिनिपातानां यावदुत्सर्जनं कृतम्॥ तावन्न परकीयन्तु स्नानादीनामनर्हकम्। अप्रतिष्ठितदेवानां न कार्यं पूजनं यथा॥अप्रतिष्ठितपापानां प्रोक्तन्तोयमपेयवत्। तदुत्सर्गः प्रकर्तव्यो निजवित्ता-

नुसारतः ॥ वित्तशाठ्यं प्रहेयं स्यादित्यब्रवीत्पराशरः । तद्विधिज्ञः शुचिः शान्तो ब्राह्मणो धर्मवित्तमः ॥ तत्कृत्यर्थं वरेण्योऽसौ चतुर्भिर्ब्राह्मणैः सह। सतोयं स तु कर्त्तव्यः प्रतिधर्मविवृद्धये ॥ विपरीतमतिर्यः स्यात् तत्कृतं कर्म निष्फलम्। तटागपालिपृष्ठेतु मण्डपं तत्र कारयेत् ॥ पूर्वोत्तरप्लवे देशे शुभे शौचसमाहितः । चतुरस्रं चतुर्द्वारं दशहस्त प्रमाणतः ॥ स्वामिहस्तप्रमाणेन तोरणानि तु कारयेत् । कार्य्याः विचित्राः पताका नानावर्णाः समन्ततः ॥ शुभपल्लवसंयुक्ता द्वारेषु कलशाः स्मृताः । यथावर्णं यथाकाष्ठं यथा कार्य्यं प्रमाणतः ॥ तथा यूपान् प्रवक्ष्यामि सर्वेषां हितकाम्यया पालाशो ब्राह्मणस्योक्तो न्यग्रोधः क्षत्रियस्य च ॥ बैल्वो वैश्यस्य यूपः स्याच्छूद्रस्योदुम्बरः स्मृतः । शिरः प्रमाणं विप्रस्य ह्याकण्ठं क्षत्रियस्य च ॥ उरः प्रमाणं वैश्यस्य शूद्रस्य नाभिमात्रकम् । पूर्वस्य दक्षिणे भागे तोरणं तत्र कारयेत् ॥ ब्रह्मस्थानञ्च तन्मध्ये अष्टौ भागाः प्रकीर्त्तिताः । तेषामुत्तरतः सोमं कुबेरं कुविदङ्गनम् ॥ धनदं धननागेति ईशावास्येति शङ्करम् । आकृष्णेनेत्यादिमन्त्रैश्च स्वैः स्वैः कल्प्यास्तथा ग्रहाः ॥ त्रातारमिन्द्रमितीन्द्र अग्निदं तेच पावकम् ।अग्निपृथुरित्यादि धर्मविच्च द्विजोत्तमः ॥ तद्विष्णोरिति वै विष्णुं नमः सूनेति नैर्ऋतम् । सप्त ऋषय इत्यादि मन्त्रेण सप्त ऋषिस्तथा ॥ वरुणस्योत्तम्भनमसि वरुणन्तु प्रकल्पयेत् । एतद्वा विंशतिः स्थाना नि मन्त्रोक्ताः पृथक् पृथक् ॥ इमं मे त्वन्नसत्वन स्त्वतायामि ह्यनुत्तमम् समुद्रोऽसि समुद्रेति त्रीन् समुद्रानिति ह्यसि ॥ दशवारुणमन्त्रैस्तु आहुतीनां शतद्वयम्। अश्वशतं शतं वापि विंशमष्टोत्तरं शतम् ॥ गोसहस्रशतं वापि शतार्द्धं वा प्रदीयते। अलाभे चैव गां दद्यादेकामपि पयस्विनीम् ॥ अरोगां वत्ससंयुक्तां सुरूपां भूषणान्विताम्। सौवर्णाराजतास्ताम्राः कांस्याः सीसाश्च शक्तितः ॥ मत्स्यनक्राद-

यः कार्य्या विविधाः पूर्वसद्भूये। गोवत्सौ वस्त्रबन्धौ च आग्नेय्यां दिशि संस्थितौ॥वायव्यभिमुखौ तत्र तारयेद्वारिमध्यतः। वस्त्रयुग्मानि त्रिः स्थाप्य छत्रिकामुद्रिकां शुभाम्॥शक्त्यान्वितैः प्रदातव्यं विमान् प्रसाद्य भक्तितः। दद्याद्विप्रेभ्यः सन्तोष्य छत्रोपानहमेव च॥ सुहेम पुरुषसंयुक्तां शय्यां दद्याच्च शक्तितः। आसनानि च शस्त्राणि भाजनानि निवेदयेत्॥ एतत्प्रदक्षिणीकृत्य स्वात्मना च विपश्चितः प्रसादयेद्द्विजान् भक्त्या इष्टापूर्तं फलं नरः॥ कृताञ्जलिपुटो भूत्वा विप्राणामग्रतः स्थितः। ब्रूयादेवं भवन्तोऽत्र सर्वे विप्रवपुर्धराः॥ न यूयं तारयध्वं मां संसारार्णवतो द्विजाः!॥ आगता मम पुण्येन पूर्वपुण्यप्रसाधकाः। कूर्मञ्च मकरांश्चैव सौवर्णं तत्र कारयेत्॥ मीनश्च राजतश्चैव ताम्रदर्दुरकाः स्मृताः। जलकुम्भचराद्यांश्च सैन्धवांस्तत्र प्रकल्पयेत्। अन्ये च जलजास्तत्र शक्त्या ताम्रान् प्रकल्पयेत्॥ इमं पुण्यं पवित्रञ्च तडाकादिविधिं नरः। खातयित्वा तटागानि स्वभावात् सम्भ्रवर्जिताः॥ मानवः क्रीडते स्वर्गे यावदिन्द्राश्चतुर्दश। एतद्विधानं विदधाति भक्त्या सर्वेषु खातेषु तडागकेषु। स वैश्च कामैः परिपूर्णदेहो भुङ्क्ते धरित्र्यामपि सर्वभोगान्॥ वदन्ति केचिद् वरुणस्य लोके प्रयान्ति लोकान् वरुणस्य कुम्भे। संपूज्यतां तत्र पुनर्धरित्र्या नरेन्द्रतामेति पराशरोक्तिः॥ इति श्रीबृहत्पाराशरीये शान्त्यध्याये वापिकूपतटागादि शान्तिविधिः समाप्तः

अथातः सम्प्रवक्ष्यामि नरेन्द्राः! श्रूयतामयम्। लक्षहोमविधिः पुण्यः कोटिहोमविधि स्तथा॥ स्वयम्भूर्यमुवाच शाक्रअस्मत्तातपितामहः। तमिमं सम्प्रवक्ष्यामि श्रूयतां पापनाशनम्॥ येवेह ब्राह्मणाः कार्य्याः भूमिर्यावत्तु मण्डपम्। समिधो याश्च मन्त्राश्च अन्यच्च तत्र यद्भवेत्॥ लक्षहोमविधिं विप्राः! कथ्यमानं निबोधत। युग्माश्च ऋत्विजः कार्य्या ब्राह्मणा ये विपश्चितः॥ निय

मन्त्रतसम्पन्ना महिताः पार्थिवेन तु। नित्यं जपपराश्चैव नियो ज्यास्तादृशा द्विजाः॥ कन्दमूलफलाहाराः दधिक्षीराशिनोऽपि वा। प्रागुदक् पूर्वदेशेषु समे स्थण्डिलमेव च॥ तत्र वेदिं च कुर्वीत पञ्चहस्तसमन्विताम्। दक्षिणोत्तरआयामे त्रिंशत्तु पूर्वपश्चिमे॥ कुण्डानि खनितव्यानि अङ्गुल्या नैकविंशतिम्। निधापयेद्धिरण्यञ्च रत्नानि विविधानि च॥ सिकता परिदेयाच तत्राप्यग्निं समिन्धयेत्। आज्यभागाहुतीर्हुत्वा न वाहुत्या च होमयेत्॥ अग्निं सोमञ्च सूर्यञ्च विष्णुञ्चैव प्रजापतिम्। विश्वेदेवान् महेन्द्रञ्च मित्रं स्विष्टिकृतं तथा॥ दधिमधुघृताक्तानां समिधाञ्चैव यज्ञिनाम्। होमयेच्च सहस्रञ्च तत्र चैव यथाक्रमम्॥ चतुर्विंशति गायत्र्या मानस्तोकेति षड् तथा। विंशद्वाभिमन्त्रैश्च चत्वारि विष्णुदैवतैः॥ कुष्माण्डैर्जुहुयात्पञ्च विकिरेद्वाथ षोडश। जुहुयाद्दशसहस्राणि जातवेदस ईदृशे॥ पञ्चसहस्राणि जुहुयात् जुहुयादिन्द्रदैवतैः। हुते शतसहस्रे तु अभिषेकन्तु कारयेत्॥ इष्वाभिषेकं यत्प्रोक्तं तदु क्वापि शुभप्रदम्॥ अथवा षोडश कुम्भैः सहिरण्यैः समङ्गलैः। सर्वौषधिसमायुक्तैः सर्वरत्नविभूषितैः॥ अभिषेकं ततस्तस्मिन् प्रधाना दक्षिणाः स्मृताः। हयाश्वरथयानानि भूमिवस्त्रे युगानि च॥ अजञ्च गोशतं हेम ऋत्विजाञ्चैव दक्षिणाम्। वृषानेकादशैवाथ दश दद्याच्च धेनवः॥ अशक्त्या वा प्रदद्याद्वा वित्तशाठ्यं विवर्जयेत्। एवं कृते तु यत्किञ्चिद् गृहपीडासमुद्भवम्॥ भौममाकाशजं वापि असद्वा यदि जायते। तत्सर्वं लक्षहोमेन प्रशमं यात्यसंशयम्॥ शान्तिर्भवति पुष्टिश्च बलं तेजः प्रवर्द्धते। वृष्टिर्भवति राष्ट्रे च सर्वोपद्रवसंक्षयः॥ इति श्रीवृहत्पाराशरीये लक्षहोमविधिः सम्पूर्णः॥

अथातः सम्प्रवक्ष्यामि कोटिहोमविधिं द्विजाः॥ श्रूयता

मादरेणायं सर्वकामफलप्रदः॥ सानुष्ठाना द्विजाः प्रोक्ता ऋत्विजा यागकर्मणि। विधिज्ञाश्चैव मन्त्रज्ञाः स्वदारनिरताश्च ये। कार्यश्चैव विशेषेण ग्रहयागविधिर्विदः॥ एकाङ्गविकलो विप्रो धनधान्यापहारकः। सर्वाङ्गविकलो यस्तु यजमानं स हिंसति॥ वर्ज्यः सर्वप्रयत्नेन विधिमन्त्रज्ञविद्द्विज। कार्यश्चैव विशेषेण ग्रहयज्ञश्च विद्द्विजैः॥ ग्रहाः फलन्तु साङ्गाश्च सुराश्चैव नरेश्वराः॥ अधोर्ध्वे येच मन्त्राणां कृत्वा चाष्टोत्तरं शतम्॥ स एव ऋत्विग्विज्ञेयः सर्वकामफलप्रदः। आवाहनीयो यत्नेन प्रणिपत्य मुहुर्मुहुः॥ एवं कृते तु यत्किञ्चिद् ग्रहपीडासमुद्भवम्। तत्सर्वं नाशयेत्येव कृतघ्नः सौहृदं यथा॥ अस्माच्छतगुणः प्रोक्तः कोटिहोमः स्वयम्भुवा। आहुतीभिः प्रयत्नेन दक्षिणाभिः फलेन च॥ पूर्ववद्ग्रहदेवाना मावाहनविसर्जने। होममन्त्रास्त एवोक्ताः स्नानदानन्तथैव च॥ मण्डपश्चैव वेद्याश्च विशेषञ्च निबोधत। कोटिहोमे चतुर्हस्तं चतुर्हस्तायतं पुनः॥ योनिवक्रद्वयोपेतं तदप्याहुस्त्रिमेखलम्। द्व्यङ्गुलोन्द्दृतकार्याच प्रथमा मेखला बुधैः॥ त्र्यङ्गुलैरुद्दृता तद्वद् द्वितीया मेखला स्मृता। उद्ध्ये मेखला या तु तृतीया चतुरङ्गुला॥ द्व्यङ्गुलस्तत्र विस्तारः पूर्वयोरेव शस्यते। वितस्तिमात्रा योनिः स्यात् षट्सप्ताङ्गुलविस्तृता॥ कूर्मपृष्ठोन्नृतं मध्ये पार्श्वतश्चाङ्गुलोन्द्दृता। गजोष्ठसदृशा तद्दायामाच्छिद्रसंयुता॥ एतत्सर्वेषु कुण्डेषु योनिलक्षणमुच्यते। मेखलोपरि सर्वत्र अश्वत्थपत्रसन्निभम्॥ वेदीञ्च कोटिहोमे स्यान्मंडपश्च चतुर्मुखः। पूर्वद्वारेऽपि संस्थाप्य बह्वृचं वेदपारगम्॥ यजुर्वेदन्तथा याम्ये पश्चिमे सामवेदिनम्। अथर्ववेदं तद्वच्च उत्तरे स्थापयेद्बुधः॥ अष्टौ तु होमकाः कार्या वेदवेदाङ्गवेदिनः। एवं द्वादशविप्राणां वस्त्रमाल्यानुलेपनैः॥ पूर्ववत् पूज

येद्रत्स्या सर्वाभरणभूषितैः। रात्रिसूक्तञ्च सौरञ्च पावमानन्तु मङ्गलम्॥ पूर्वतो बह्वृचः शान्तिं पठमानोह्युदङ्मुखम्। सौक्तं रौद्रञ्च सौम्यञ्च कूष्माण्डं शान्तिमेव च॥ पाठयेद्दक्षिणे द्वारे यजुर्वेदिनमुत्तमम्। सौवर्णमथ वै राज्य माग्नेयीं रुद्रसंहिताम्॥ ज्येष्ठसामन्तथा शान्तिं च्छन्दोगं पश्चिमे जपेत्। पञ्चभिः सप्तभिर्वाथ होमः कार्यश्च पूर्ववत्॥ स्नाने दाने च मन्त्राः स्यु स्त एव द्विजसत्तमाः॥ वसोर्धाराविधानन्तु लक्षहोमवदिष्यते॥ अनेन विधिना यश्च ग्रहपूजां समाचरेत्। सर्वान् कामानवाप्नोति ततो विष्णुपुरं व्रजेत्॥ यः पठेत् शृणुयाद्वापि ग्रहयागमिमं नरः। सर्वपापविशुद्धात्मा पदमैन्द्रं स गच्छति॥ अश्वमेधसहस्रञ्च दश चाष्टौ च धर्मवित्। कृत्वा यत् फलमाप्नोति कोटिहोमात्तदश्नुते॥ ब्रह्महत्यासहस्राणि भ्रूणहत्यार्बुदानि च। नश्यन्ति कोटिहोमेन स्वयम्भू वचनं यथा॥ मपेदिरे तस्य पितामहाद्याः शुभेषु पापेन गरीयसा तान्। उद्धृत्य नाकं स नयेद्धि सर्वान्यो लक्षहोमे नृपतीरतः स्यात्॥ राष्ट्रं मनोवाञ्छितवृष्टियुक्तं धान्यैश्च रत्नैः पशुभिः समेतम्। निर्द्वन्द्वनीरोगमदस्यु तस्माद्यो लक्षकोटीहवनं विदध्यात्॥ यो लक्षहोमं विदधाति भूभृत् तद्व्यलक्षं शतहोमकः स्यात्। प्रत्यब्दमाप्नोति स दीर्घमायुर्भुङ्क्ते सपत्नान् विजयेद्धरित्रीम्॥ यो ब्रह्मघाती गुरुदारगोऽपि ग्रामाविदाहोद्भवपापयुक्तः। राजा स मुक्तः शतलक्षहोमाग्निः शेषपापैर्विबुधत्वमेति॥ तस्मात्तदा भूपतयो विदध्युर्वृष्टीः प्रजासौख्यबलस्य पुष्ट्यै। आयुः प्रसृद्धौ विजयाय कीर्त्यै लक्षस्य होमे ग्रहयोगमेतम्॥ इति श्रीबृहत्पाराशरीये-कोटिहोमः सम्पूर्णः॥

अथो अन्यत्प्रवक्ष्यामि विधिम्पावनमुत्तमम्। अस्मत्तातमतातोऽयं रघुपुत्राय धीमते॥ अनपत्यस्य पुत्रार्थं कुर्याद्वै भाण्डि

कं स्वयम्। सहस्रशीर्षसूक्तस्य विधानञ्चरुपाककम्॥ नैर्यैः कृतं नृपैः पूर्वै रन्यैरपि द्विजोत्तमैः। उपासितन्तु सद्भक्त्या श्रोत्रियैर्वेदपारगैः॥ आत्मविद्भिर्निराहारै र्व्रीहिभि र्मन्त्रउत्तमैः। क्रियमाणाः क्रियाः सर्वाः सिध्यन्ति व्रतचारिभिः॥ न पाठान्न धनात् स्नानात् नात्मनः प्रतिपादनात्। प्रोक्तस्य कर्मणः पुंसां सर्वा भवन्ति सिद्धयः॥ शुक्लपक्षे शुभे वारे शुभनक्षत्रगोचरे। द्वादश्यां पुत्रकामाय संकुर्वन्ति च वैष्णवम्॥ दम्पत्योरुपवासश्च ह्येकादश्यां सुरालये। ऋग्भिः षोडशभिः सम्यगर्चयित्वा जनार्दनम्॥ चरुं पुरुषसूक्तेन श्रपयेत् पुरुषकाम्यया। प्राप्नुयाद्वैष्णवं पुत्रं चिरायुः सन्ततिक्षमम्॥ द्वादश्यां द्वादश सम्यग् विधिवन्निर्वपेच्चरून्। यः करोति इहायाति स विष्णोः परमं पदम्॥ हुत्वाज्यं विधिवत् पूर्वं ऋग्भिः षोडशभिस्तथा। समिधोऽश्वत्थवृक्षस्य हुत्वाज्यं जुहुयात् पुनः॥ उपस्थानं ततः कुर्यात् ध्यात्वा च मधुसूदनम्। हविर्होमं पुनः कृत्वा जुहुयात्पञ्च घृताहुतीः॥ हविःशेषं नमस्कृत्य नारी नारायणं पतिम्। संप्राश्य च हविःशेषं लघ्वासीत वसेद्गृहे॥ ततः कृत्वा इदं कर्म कर्त्तव्यं द्विजतर्पणम्। रजः स्त्रीषु निवर्त्तेत यावद्गर्भं न विन्दति॥ असूता मृतपुत्रा वा यावत्कन्या प्रसूयते। क्षिप्रं सा जनयेत् पुत्रं पराशरवचो यथा॥ होमान्ते दक्षिणान्दद्यात् धेनुं वासस्तथा तिलान्। भूमिं हिरण्यं वस्त्राणि यथासम्भवमेव वा॥ यः सिद्धमन्त्रः सततं द्विजेन्द्राः। संपूज्य विष्णुं विधिवत्सुतीर्थे। इमं विधानं विदधाति सम्यक् स पुत्रमाप्नोति हरेः प्रसादात्॥ इति श्रीवृहत्पाराशरीये शान्त्यध्याये पुत्रकामोऽयं पुरुषसूक्तविधिः सम्पूर्णः॥

अथातः सम्प्रवक्ष्यामि गृहमन्त्रोऽधिदैवतम्। आर्षच्छन्दश्च यज्ज्ञानात्कर्म स्यात्समलङ्कृतम्॥ आकृष्णेनेति मन्त्रेऽस्मिन्देवत्वं सविता महन्। ऋषिं हिरण्यरूपाख्यं त्रिष्टुप् छन्दः प्रकीर्तितम्

आप्यायस्वेति सोमोऽत्र दैवतं गौतमो मुनिः। गायत्रीच्छन्द उद्दिष्टं
विनियोगो यथोदितम्॥ अग्निर्मूर्द्धेति मन्त्रोऽत्र दैवतं भौममुच्य
ते। विरूपाक्षो मुनिर्धीमान् छन्दोगायत्र्य मिष्यते॥ उद्बुध्यस्वेति
मन्त्रस्य बुधश्चैव तु दैवतम्। मुनिर्बुधश्च मन्तव्य स्त्रिष्टुप्छन्दः
प्रकीर्तितम्॥ शुक्रत्वमिति हीत्यत्र शुक्र इत्यधिदैवतम्। शुक्रस्या
पि तथार्षञ्च विराट्छन्दः प्रकीर्तितम्॥ शन्नो देवीतिचेत्यत्र शनि
दैवत मुच्यते। सिन्धुर्नाम मुनिर्विद्वान् छन्दोगायत्र्य मुच्यते॥ का-
ण्डात्काण्डादिभिर्मन्त्रस्य राहुदैवत मुच्यते। ऋषिः प्रजापतिः प्रो
क्तोऽनुष्टुप्छन्दः प्रकीर्तितम्॥ केतुं कृण्वनिति प्रोक्तं दैवतं केतुरेव
हि। मधुच्छन्दस आर्षञ्च गायत्र्यं छन्द एव हि॥ स्योना पृथिवीत्य
त्र स्कन्दस्य देवता स्मृता। इन्द्रकुत्सेति दैवत्य मिन्द्र एव स्मृतो बु
धैः॥ आर्षन्ततृत्स्यस्य चापुत्र स्त्रिष्टुप्छन्दः प्रकीर्तितम्। यस्मिन्नृ
क्षेति ह्येत्यत्र यमोवै देवता परा॥ ऋषिस्तु कुष्मली नामच्छन्दोऽ
नुष्टुप् स्मरेद्बुधः। ब्रह्मजज्ञमित्यत्र च कालो दैवतकं महत्॥ मुनि
र्यमानतुर्नाम त्रिष्टुप्छन्दो विधीयते। आयाते मेतिच ह्यस्यां चि
त्रगुप्तस्तु दैवतम्॥ आर्षन्तु वामदेवस्य त्रिष्टुप्छन्दो ह्यथो बुधैः।
अग्निं दूतमितिह्य स्यादग्निर्वै देवतास्मृता॥ आर्षं मेधातिथेरत्र
च्छन्दोगायत्र्यमेव हि। अस्वस्तु सोम इत्यत्र सोमं वैदैवतं स्मरेत्
॥ मेधातिथिरिहाप्युक्तोऽनुष्टुप्छन्दश्च उच्यते। भूति पृथिव्यन्त-
रिक्ष मित्यत्र दैवतं क्षितिः॥ ऋषिः शातातपः श्रुत्वा छन्दश्चानुष्टु
बुच्यते। पुरुषसूक्तस्य दैवत्यं पुरुषेच हितं बुधैः॥ आर्षं नाराय
णस्येह छन्दस्यानुष्टुबित्यपि। इन्द्रोपेन्द्रो मरुत्वन्तो मरुत्वान्दैव
तं महत्॥ आर्षन्तु काश्यपस्येह गायत्र्यछन्दएव हि। मरुत्वनित्य-
त्रबुधैः सुरेन्द्रो देवता मता॥ अत्रापि कश्यपस्यार्षं गायत्र्यछन्द
एव हि। उत्तानपर्ण मित्यत्र इन्द्रो दैवत मुच्यते॥ आर्षं साङ्ख्यस्य

वैवोक्तम् अनुष्टुप्छन्द इत्यपि। प्रजापते इति ह्यत्र देवताच प्रजा पतिः॥ हिरण्यगर्भस्यार्षन्तु त्रिष्टुप्छन्दो मतं बुधैः। आयं गौरिति ह्यत्र देवता पूजने मता॥ सर्पराजमुनिर्ह्यत्र गायत्र्यं छन्द इष्यते। एष ब्रह्मा ऋत्विज इति ब्रह्माद्दिषोऽधिदैवतम्॥ ऋषिर्वै वामदेवोत्र गायत्र्यछन्द इष्यते। आतृण्वन् इन्द्रवृदग्न् सुरेन्द्रं शर्मणोश्वरः॥ वामदेवोह्यस्य आर्षं गायत्र्यछन्द इत्यपि। जातवेदस इत्यत्र जातवेदास्तु दैवतम्॥ कश्यपस्यार्षमत्रापि च्छन्दोऽनुष्टुप् प्रकीर्तितम्। आनोनियुद्भिरित्यस्मिन् वायुर्दैवतमुच्यते॥ आर्षश्चात्र वसिष्ठस्य अनुष्टुप्छन्द एव हि। नमः प्रकाशदैवत्यं मुनिप्रोक्तं प्रजापतिः॥ गायत्र्यं छन्दसाम्वरं विनियोगो यथोचितम्। ईषो उपेति चात्यत्र अश्विनौ दैवते स्मरेत्॥ प्रस्कण्वस्यार्षमत्रापि गायत्र्यच्छन्द उत्तमम्। मरुतो यस्य हिष्यस्य मरुद्दैवत मुच्यते॥ गौतमश्च मुनिर्विद्वन्। च्छन्दसः प्रथमं मुने!। दैवत्य मार्ष सहच्छन्दसां यो मत्वाद्विजाग्र्यः कुरुते विधानम्। वेदोक्तमर्थं भवतिस्म सर्वं सम्यक्फलं कर्त्तुमिहाप्यमुत्र॥ यो लक्षहोमं ह्यचयः कोटिहोमं राजा विदध्यात्प्रतिवर्षमेकम्। राष्ट्रे स्ववृष्टिर्विजयः सुभिक्षम् आरोग्यता स्यात् सुकृतस्य वृद्धिः॥ भवन्ति पुत्राः शुभसन्तति क्षमाश्चिरायुषो राजहिता धरित्र्याम्। सुकीर्तिमन्तो जयिनोऽपि राज्ये प्रतापवन्तो रविचन्द्र तुल्याः॥ ॥ इति श्रीबृहत्पाराशरीये शान्तिविधिर्नाम नवमोऽध्यायः॥

अथातो नृपतेर्धर्मं वक्ष्यामि हितकाम्यया। पराशरोदितं विप्र! वक्ष्यमाणं निबोधत॥ भूभृत् भूमा परो देवपूज्योऽसौ परदेवकः। स विधाता च सर्वस्य रक्षिता शासितापि च॥ इन्द्रादियमवित्तेशवारीशमातरिश्वनः। शीतांशुस्तीव्रभासश्च ब्रह्मादयो द्विजो नृपः॥ नृपो वेधा नृपः शम्भु नृपोऽर्को विष्टरश्रवाः। दाल

